**कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं**
**येषां तान्प्रति मानमुज्झत नृपाः ! कस्तैः सह स्पर्धते ॥१३॥**

अन्वयः—यत् (विद्याख्यम्) धनम् हर्तुः गोचरम् न याति, सर्वदा किम् अपि शम् पुष्णाति, अर्थिभ्यः अनिशम् प्रतिपाद्यमानम् पराम् वृद्धिम् प्राप्नोति, कल्पान्तेषु अपि निधनम् न प्रयाति, तत् विद्याख्यम् अन्तर्धनम् येषाम् (अस्ति) तान् प्रति हे नृपाः मानम् उज्झत, कः तैः सह स्पर्धते ।

संस्कृत-व्याख्या—यत्—विद्याख्यं, धनम्—अर्थः, हर्तुः—चोरस्य, गोचरं न याति—दृष्टिपथं नावतरति, सर्वदा—सदा, किमपि—अनिर्वचनीयं, शं—कल्याणं, पुष्णाति—प्रवर्धयति, अर्थिभ्यः—याचकेभ्यः शिष्येभ्य इति यावत्, अनिशं—सततं, प्रतिपाद्यमानं—दीयमानं, परां—परमां, वृद्धिम्—अभ्युदयं, प्राप्नोति—लभते, कल्पान्तेषु अपि—संसारप्रलयेषु अपि, निधनं—नाशं, न प्रयाति—न गच्छति, तत्, विद्याख्यं—विद्यानामकम्, अन्तर्धनम्—अभ्यन्तरस्यवित्तं, येषां—पुरुषाणाम् (अस्ति), तान्—विद्याधनान्, प्रति, (हे) नृपाः—(हे) राजानः !, मानम्—अहङ्कारम्, उज्झत—त्यजत । कः—नरः, तैः—विद्वद्भिः, सह—साकं, स्पर्धते—विगृह्णाति न कोऽपीत्यर्थः ।

अनुवाद—जो गुप्त विद्या-धन चोरों को नहीं दीख पड़ता, जो सर्वदा सुख की वृद्धि करता है, जो याचकों को देने पर भी सदा बढ़ता ही रहता है और जो कल्पान्त होने पर भी नष्ट नहीं होता, ऐसा विद्या-धन हे राजाओ ! जिन महापुरुषों के पास है, उनके प्रति घमण्ड करना छोड़िये, भूलकर भी घमण्ड न कीजिये । कौन उनकी बराबरी कर सकता है ?

The hidden treasure called learning does not become visible to a thief, always promotes unspeakable happiness, ever increases greatly when given to suppliants, and it is not destroyed even at the end of the life of the creation. O kings, cast away your pride, towards those people who have this treasure. Who can rival them ?

संस्कृत-भावार्थ—हे नृपाः ! विद्याधनम् अहार्यम् अक्षयं व्ययेन वर्धनशीलं वर्तते । ईदृग् धनं यैः पुरुषैरासादितं तान् प्रति अवहेलां मा गात, प्रत्युत ते युष्माभिः सादरं माननीयाः ।

टिप्पणी (१) हर्तुः—हरण करने वाले, चोर के। √हृ+तृच् कर्तरि=हर्ता, तस्य। (२) गोचरम्—प्रत्यक्ष, इन्द्रियों की पहुँच के भीतर। गावः चरन्ति अस्मिन् इति गोचरो देशः, चरागाह। गो का अर्थ इन्द्रिय भी है। तब अर्थ होगा—जहाँ इन्द्रियाँ पहुँच सकती हैं अर्थात् दृष्टिपथ पर आने वाला। गो√चर्+घ 'गोचरसंचर' इत्यादिना। (३) शं पुष्णाति—कल्याण को पुष्ट करता है या बढ़ाता है। पुष् धातु क्र्यादि है। इसके रूप—पुष्णाति, पुपोष, अपोषीत्। (४) अर्थिभ्यः—याचकों या विद्यार्थियों को। सम्प्रदाने चतुर्थी। (५) अनिशम्—निरन्तर। 'सततानारताश्रान्तसन्ततविरतानिशम्' इत्यमरः। (६) प्रतिपाद्यमानम्—दिया जाता हुआ। प्रति√पद्+णिच्+शानच्। (७) कल्पान्तेषु—कल्पान्त या प्रलय होने पर। कल्पानाम् अन्ताः (ष० त०), तेषु। यहाँ बहुवचन से यह दिखाया गया है कि कई कल्पों के अन्त हो जाने पर भी। विद्याधन की सर्वश्रेष्ठता अन्यत्र भी सुभाषित द्वारा प्रदर्शित की गई है—'न चोरहार्यं न च राजहार्यं न भ्रातृभाज्यं न च भारकारि। व्यये कृते वर्धत एव नित्यं विद्याधनं सर्वधनप्रधानम्॥' (८) विद्याख्यम्—विद्या नामक। विदन्ति अनया इति विद्या √विद्+क्यप्+टाप्। विद्या इति आख्या नाम यस्य तत् (ब० स०)। (९) अन्तर्धनम्—भीतरी धन, गुप्त धन। अन्तर्गतं धनम् (मध्य० स०)। (१०) उज्झत—त्याग दो। (११) स्पर्धते—स्पर्धा या होड़ करता है।

इस श्लोक में विद्याधन सब धनों से श्रेष्ठ है ऐसा प्रतिपादन करने के कारण व्यतिरेक अलंकार है और दूसरे चरण में 'दिये जाने पर भी बढ़ता ही है' ऐसे कथन में विरोधाभास अलंकार है। इसमें शार्दूलविक्रीडित छन्द है।

विद्वानों को धन से वश में नहीं किया जा सकता—

अधिगतपरमार्थान्पण्डितान्मावमंस्था-
स्तृणमिव लघुलक्ष्मीर्नैव तान्संरुणद्धि।
अभिनवमदलेखाश्यामगण्डस्थलानां
न भवति बिसतन्तुर्वारणं वारणानाम् ॥१४॥

अन्वयः—(हे नृप!) अधिगतपरमार्थान् पण्डितान् मा अवमंस्थाः, तृणम् इव लघुलक्ष्मीः तान् नैव संरुणद्धि। बिसतन्तुः अभिनवमदलेखाश्यामगण्डस्थलानाम् वारणानाम् वारणम् न भवति।

**संस्कृत-व्याख्या**—(हे राजन् !) अधिगतपरमार्थान्—अधिगतः लब्धः परमार्थः तत्त्वज्ञानं यैः तादृशान्, पण्डितान्—विदुषः, मा अवमंस्थाः—मा अवमानय, तृणम् इव—घास इव, लघुलक्ष्मीः—लघुः तुच्छा लक्ष्मीः सम्पत्, तान्—पण्डितान्, नैव संरुणद्धि—रोद्धुं न शक्नोति । विसतन्तुः—कमलनाल-सूत्रम्, अभिनवमदलेखाश्यामगण्डस्थलानाम्—अभिनवः नूतनः यो मदः दानं तस्य लेखाभिः धाराभिः श्यामानि कृष्णानि गण्डस्थलानि कपोलभित्तयो येषां तादृशानां, वारणानां—गजानां, वारणं—रोधकवस्तु, न भवति—न जायते ।

**अनुवाद**—तत्त्वज्ञान प्राप्त किये हुए पण्डितों का अनादर मत करो। तृण के समान तुच्छ लक्ष्मी उनको बाँध नहीं सकती। नवीन मदरेखा से जिन मातङ्गों के गण्डस्थल काले हो गये हैं उन मातंगों को बाँधने के लिये कमल के डंठल का सूत सीकर (जंजीर) नहीं हो सकता।

Do not disregard the learned who have attained the highest truth (about Brahma). Wealth that insignificant thing like a straw does not obstruct them. A lotus-fibre does not become a hindrance, (*i .e.* tether) to elephants whose temples are darkened with stream of fresh ichor.

**संस्कृत-भावार्थ**—हे नृप ! तव लघुलक्ष्मीः तत्त्वज्ञानिनः पुरुषान् वशीकर्तुं तथैव नार्हति यथा मृणालसूत्रं मत्तगजान् रोद्धुं न प्रभवति । अतस्त्वं विदुषो नापमानय ।

**टिप्पणी**—(१) **अधिगतपरमार्थान्**—जिन्हें तत्त्वज्ञान प्राप्त हो गया है ऐसे । परमः अर्थः परमार्थः (कर्म० स०), अधिगतः परमार्थः यैः ते अधिगतपरमार्थाः (ब० स०), तान् । (२) **मा अवमंस्थाः**—अपमान मत करो । अव√मन्+लुङ् 'माङि लुङ्' इत्यनेन, 'न माङ्योगे' इत्यनेन अडागमनिषेधः । मन् धातु दिवादिगणीय आत्मनेपदी है । इसके रूप—मन्यते, मेने, अमंस्त । (३) **लघुलक्ष्मीः**—क्षुद्र संपत्ति ।√लक्ष्+ई, मुट् आगम=लक्ष्मीः । लघुः वा लघ्वी लक्ष्मीः (कर्म० स०) । **विसतन्तुः**—कमल के डंठल का सूत । 'मृणालं बिसम्' इत्यमरः । विसस्य तन्तुः (ष० त०) । (४) **अभिनवमदलेखाश्यामगण्डस्थलानाम्**—नवीन मद की लकीरों से काले गण्डस्थल वाले । अभिनवः मदः (कर्म० स०), तस्य लेखाः (ष० त०), ताभिः श्यामानि (तृ० त०), तादृशानि गण्डस्थलानि

येषां ते (ब० स०), तेषाम् । प्रशस्ताः गण्डाः इति गण्डस्थलानि (नित्यसमासः) अथवा गण्डानां स्थलानि (ष० त०) (५) वारणानाम्—हाथियों का । 'कुञ्जरो वारणः करी' इत्यमरः (६) वारणम्—निरोधक वस्तु या बंधन ।

इस श्लोक में दृष्टान्त अलंकार है, क्योंकि 'लक्ष्मीः तान् नैव संरुणद्धि; वारणानां वारणं न भवति' इस प्रकार दो पृथक्-पृथक् वाक्यों में समानता दिखाई गई है। इसमें मालिनी छन्द है। छन्द का लक्षण—'ननमयययुतेयं मालिनी भोगिलोकैः'।

विद्वानों के गुणों का अपहरण नहीं होता—

अम्भोजिनीवनविहारविलासमेव
हंसस्य हन्ति नितरां कुपितो विधाता ।
न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां
वैदग्ध्यकीर्त्तिमपहर्तुमसौ समर्थः ॥१५॥

अन्वयः—विधाता कुपितः सन् हंसस्य अम्भोजिनीवनविहारविलासम् एव नितराम् हन्ति । तु असौ अस्य दुग्धजलभेदविधौ प्रसिद्धाम् वैदग्ध्यकीर्त्तिम् अपहर्तुम् न समर्थः ।

संस्कृत-व्याख्या—विधाता—ब्रह्मा, कुपितः—क्रुद्धः, (सन्) हंसस्य—मरालस्य, अम्भोजिनीवनविहारविलासम् एव—अम्भोजिनीवने कमलिनीवने विहारः क्रीडा एव विलास आनन्द इति यावत् तमेव, नितराम्—अतिशयेन, हन्ति—नाशयति, तु—पुनः, असौ—विधाता, अस्य—हंसस्य, दुग्धजलभेदविधौ—क्षीरनीरविवेकविषये, प्रसिद्धां—विख्यातां, वैदग्ध्यकीर्तिं—चातुर्ययशः, अपहर्तुं—नाशयितुं, न समर्थः—न क्षमः ।

अनुवाद—विधाता क्रुद्ध होकर हंसों के कमल-वन में विचरण करने के सुख को एकदम नष्ट कर सकता है। पर उसके दूध और पानी को अलग-अलग करने वाले गुण को नहीं छीन सकता।

The Creator being angry can destroy entirely the luxury of the swan in sporting in the forest of lotuses, but he cannot rob the swan of his famous reputation for the native instruct of differentiating milk from water.

संस्कृत-भावार्थ—कुपितो ब्रह्मा हंसस्य पद्मिनीवनविलासमेव नाशयितुं शक्नोति न तु तस्य नीरक्षीरविवेकिनी चातुर्यकीर्तिम्, तथैव कुपितो राजा विदुषः स्वराज्यात् विवासयितु शक्नोति, परन्तु तेषां परिशीलनचातुर्यं हर्तुं न शक्नोति।

टिप्पणी—(१) विधाता—ब्रह्मा। वि√धा+तृच् (२) अम्भोजिनीवनविहार-विलासम्—कमलिनियों के वन में विहार करने का सुख। वि√हृ=घञ् भावे=विहारः। वि√लस्+घञ् भावे=विलासः। विहार एव विलासः (मयूरव्यंसकादित्वात् स०) अम्भोजिनीनां वनम् (ष० त०), तस्मिन् विहारः (स० त०), तस्य विलासः (ष० त०), तम्। (३) नितराम्—एकदम। नि+तरप्, आम् 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्यनेन। यह 'हन्ति' तथा 'कुपितः' दोनों का क्रियाविशेषण हो सकता है। (४) दुग्धजलभेदविधौ—दूध और जल को अलग-अलग कर देने के सम्बन्ध में। दुग्धं च जलं च इति दुग्धजले (द्व० स०), तयोः भेदः (ष० त०), तस्य विधिः (ष० त०), तस्मिन्। विषयाधिकरणे सप्तमी। (५) प्रसिद्धाम्—विख्यात। प्र√सिध्+क्त+टाप्, ताम्। (६) वैदग्ध्यकीर्तिम्—चतुराई के यश को। वि√दह्+क्त=विदग्ध। विदग्धस्य भावः वैदग्ध्यम् विदग्ध+ष्यञ्। 'कृत्यवस्तुषु चातुर्यं वैदग्ध्यं परिकीर्त्यते'। वैदग्ध्येन कीर्तिः (तृ० त०), ताम्।

इस श्लोक में अप्रस्तुतप्रशंसा अलंकार है, क्योंकि यहाँ प्रस्तुत विद्वान् के रहते तत्तुल्य अप्रस्तुत हंस का वर्णन किया गया है। इसमें वसन्ततिलका छन्द है। 'उक्ता वसन्ततिलका तभजा जगौ गः'।

वाणी सबसे बड़ा आभूषण है—

केयूराणि न भूषयन्ति पुरुषं, हारा न चन्द्रोज्ज्वला
न स्नानं न विलेपनं न कुसुमं नालंकृता मूर्धजाः।
वाण्येका समलंकरोति पुरुषं या संस्कृता धार्यते
क्षीयन्तेऽखिलभूषणानि सततं वाग्भूषणं भूषणम् ॥१६॥

अन्वयः—न केयूराणि, न चन्द्रोज्ज्वलाः हाराः, न स्नानम्, न विलेपनम्, न कुसुमम्, न अलंकृताः मूर्धजाः, पुरुषं भूषयन्ति। या संस्कृता धार्यते, सा एका पुरुषम् समलङ्करोति। अखिलभूषणानि क्षीयन्ते, वाग्भूषणं सततं भूषणम्।

संस्कृत-भावार्थ—न, केयूराणि—अङ्गदानि, न, चन्द्रोज्ज्वलाः—चन्द्र इव उज्ज्वलाः धवलाः, हाराः—मुक्ताहाराः, न, स्नानम्—अभिषेकः, न, विलेपनं—चन्दनलेपनं, न, कुसुमं—पुष्पम्, न, अलंकृताः—भूषिताः, मूर्धजाः—केशपाशाः, पुरुषं—मनुष्यं, भूषयन्ति—अलङ्कुर्वन्ति। या, वाणी—वाक्, संस्कृता—परिष्कृता, धार्यते—मुखे स्थाप्यते, (सा) एका—केवला, पुरुषं—नरं, समलङ्करोति—विभूषयति। अखिलभूषणानि—समस्तालङ्काराः, क्षीयन्ते—कालक्रमेण नश्यन्ति, वाग्भूषणं—वाणीभूषणं, सततम्—अविरतम्, भूषणम्—आभूषणम् (अस्ति)।

अनुवाद—बांह पर बिजौटा पहनने से मनुष्य की शोभा नहीं होती, और न चन्द्रमा के जैसे कान्तिमान मुक्ताहार पहनने ही से। न स्नान करने से, न चन्दनादि अंगराग लगाने से, न पुष्पमाला धारण करने से और न केशपाशों को सजाने ही से उसकी शोभा होती है। सुसंस्कृत वाणी ही एक वस्तु है जो मनुष्य को सुशोभित करती है। और सब भूषण तो नष्ट हो जाते हैं। वाणीरूपी भूषण ही सदा बना रहता है, कभी नष्ट नहीं होता।

Bracelets do not beautify a man, nor the necklaces bright like the moon; nor bath, nor sandal-besmearing, nor flower, nor the well-dressed locks, speech alone, garbed in a refined form, beautifies a person. All other ornaments wear away, the ornament of speech is the real everlasting ornament.

संस्कृत-भावार्थ—अङ्गदानि हाराः स्नानं विलेपनं पुष्पं भूषितकुन्तलाश्च पुरुषं तथा न भूषयन्ति यथा व्याकरणशुद्धिभूषिता एका वाणी तं भूषयति। अपरं च, समस्तान्याभूषणानि कालक्रमेण नश्यन्ति किन्तु वाणीभूषणं सदा अनपायि तिष्ठति।

टिप्पणी—(१) केयूराणि—बाजूबंद। के बाहुशिखरे यान्ति इति केयूराणि के√या+उर, कित्, अलुक् स०। 'केयूरमङ्गदं तुल्ये' इत्यमरः। (२) चन्द्रोज्ज्वलाः—चन्द्रमा के समान धवल। उद्√ज्वल्+अच् पचादित्वात्=उज्ज्वल। चन्द्रः इव उज्ज्वलः (उपमित स०) 'उपमानानि सामान्यवचनैः' इत्यनेन, ते। (३) मूर्धजाः—बाल। मूर्ध्नि जायन्ते इति मूर्धजाः मूर्धन्√जन्+ड, उपपद स०। (४) संस्कृता—परिष्कृत, व्याकरण आदि से शुद्ध। सम्√कृ+क्त+टाप्, 'सम्परिभ्यां करोतौ भूषणे सुट्' इत्यनेन (५) अखिलभूषणानि—सभी गहने। न√खिल्+क, (नञ् त०)=अखिल। √भूष्+ल्युट् करणे=भूषण। अखिलानि

भूषणानि (कर्म० स०)। (६) वाग्भूषणम्—वाणी रूपी भूषण। वाक् एव भूषणम् (मयूरव्यंसकादित्वात् रूपकल्प स०)। (७) सततम्—स्थायी या नित्य। सम्√तन्+क्त कर्तरि, 'समो वा हिततततयोः' इति कारिकया मलोपः।

इस श्लोक में अन्य आभूषणों की अपेक्षा वाणी रूपी आभूषण अधिक स्थायी है, ऐसा कथन होने से व्यतिरेक अलंकार है। इसमें शार्दूलविक्रीडित छन्द है।

विद्या की महिमा—

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तं धनं
विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः।
विद्या बन्धुजनो विदेशगमने विद्या परा देवता
विद्या राजसु पूज्यते, नहि धनं विद्याविहीनः पशुः ॥१७॥

अन्वयः—विद्या नाम नरस्य अधिकम् रूपम् (अस्ति), प्रच्छन्नगुप्तम् धनम् (अस्ति), विद्या भोगकरी यशःसुखकरी (अस्ति), विद्या गुरूणाम् गुरुः (अस्ति), विद्या विदेशगमने बन्धुजनः (अस्ति), विद्या परा देवता (अस्ति)। विद्या राजसु पूज्यते, धनम् नहि पूज्यते। विद्याविहीनः (नरः) पशुः (अस्ति)।

संस्कृत-व्याख्या—विद्या—शास्त्रादिज्ञानं, नाम—प्राकाश्ये अभ्युपगमे वा, नरस्य—मनुष्यस्य, अधिकं—श्रेष्ठं, रूपम्—आकारविशेषः (अस्ति), प्रच्छन्नगुप्तं—प्रच्छन्नं निगूढं गुप्तं रक्षितं च, धनं—सम्पत्तिः (अस्ति), विद्या, भोगकरी—भोग्यवस्तुलाभहेतुः, यशःसुखकरी—कीर्तिसुखहेतुः (अस्ति), विद्या, गुरूणाम्—आचार्याणां, गुरुः—आचार्यः (अस्ति), विद्या, विदेशगमने—परदेशयात्रायां, बन्धुजनः—सुहृज्जनः (अस्ति), विद्या, परा—उत्कृष्टा, देवता—देवस्वरूपा (अस्ति), विद्या, राजसु—नृपेषु, पूज्यते—आद्रियते। विद्याविहीनः—विद्यया विहीनः रहितः (नरः), पशुः—पशुसदृशः (अस्ति)।

अनुवाद—विद्या ही मनुष्य की सब से बड़ी सुन्दरता है, यही उसका छिपा हुआ सुरक्षित धन है, विद्या ही भोग-विलास देने वाली, यश और सुख देने वाली तथा गुरुओं का भी गुरु है; विदेश में विद्या ही मित्र बनता है, विद्या परम देवता है, राजाओं के बीच में विद्या ही पूजी जाती है, धन नहीं पूजा जाता। विद्याविहीन मनुष्य पशु के समान है।

Learning, is verily the greatest beauty for man. It is a well-protected hidden treasure. Learning promotes one's pleasure, and conduces to one's fame and happiness. Learning is the preceptor of the preceptors. Learning is a friend in foreign journey. It is the highest god. Learning is honoured among kings, and not wealth. One devoid of learning is a beast.

**संस्कृत-भावार्थ**—विद्या नरस्य श्रेष्ठं रूपम्, गुप्तं धनं, स्रक्चन्दनवनितादि-भोग्यपदार्थान् प्रस्तौति, प्रवासे बन्धुरिव हितकारिका, परमा देवता, राजसम्मानं दापयति । एवंविधविद्यया शून्यो जनः पशुतुल्यो भवति ।

**टिप्पणी**—(१) **विद्या**—विदन्ति अनया इति विद्या√विद्+क्यप्+टाप् । (२) **नाम**—यह अव्यय शब्द है । प्राकाश्य अर्थ में—'जैसा कि सर्वविदित है' अथवा स्वीकार अर्थ में—'वस्तुतः या सचमुच मैं स्वीकार करता हूँ'—इसका प्रयोग हुआ है । 'नाम प्राकाश्यसंभाव्यक्रोधोपगमकुत्सने' इत्यमरः । (३) **प्रच्छन्नगुप्तम्**—छिपा हुआ सुरक्षित । प्र√छद्+क्त कर्मणि=प्रच्छन्न । √गुप्+क्त कर्मणि=गुप्त । प्रच्छन्नं च तत् गुप्तं च इति प्रच्छन्नगुप्तम् (विशेषणोभयपद कर्म० स०) 'खञ्जकुब्जः' की तरह । अथवा प्रच्छन्नं यथा गुप्तम् । इसमें 'प्रच्छन्नं' क्रियाविशेषण है, जो 'गुप्तम्' की विशेषता प्रकट करता है । (४) **भोगकरी**—भोग्य वस्तु की प्राप्ति में हेतु अर्थात् भोग को प्रदान करने वाली । भोगान् करोति इति भोग√कृ+ट कृञो हेतुताच्छील्यानुलोम्येषु' इत्यनेन, ततः 'टिड्ढाणञ्'—इत्यादिना ङीप् । (५) **यशःसुखकरी**—यश और सुख प्रदान करने वाली । यशश्च सुखं च इति यशःसुखे (द्व० स०) ते करोति इति यशः-सुख√कृ+ट+ङीप् । (६) **गुरूणां गुरुः**—गुरुओं का भी गुरु । गृणन्ति हितम् उपदिशन्ति इति गुरवः √गॄ+कु । 'गुरूणाम्' में 'यतश्च निर्धारणम्' सूत्र से षष्ठी हुई । यहाँ 'गुरुः' स्त्रीलिंग में प्रयुक्त है । गुरुशब्द के दो स्त्रीलिंग रूप होते हैं—'गुर्वी' और 'गुरुः' । इसका कारण है—'वोतो गुणवचनात्' सूत्र से ङीप् विकल्प से होता है । (७) **बन्धुजनः**—बन्धु । बध्नाति मनः स्नेहात् इति बन्धुः√बन्ध्+उ (उणादि) । (८) **राजसु पूजिता**—राजाओं के विषय में अर्थात् राजाओं से पूजित । विषयाधिकरणे सप्तमी । यहाँ 'क्तस्य च वर्तमाने' सूत्र से षष्ठी होनी चाहिए । तब 'राज्ञः पूजिता' पाठ होगा । इसलिए इसे समस्त

पद मानकर 'राजसुपूजिता पाठ मानना अच्छा होगा। (६) विद्याविहीनः—विद्या से रहित। वि√हा (ओहाक् त्यागे)+क्त कर्मणि =विहीनः। विद्यया विहीनः (तृ० त०)।

इस श्लोक में उपमान और उपमेय में अभेद होने के कारण रूपक अलंकार है और यहाँ अनेक रूपक होने से मालारूपक है। इसमें शार्दूलविक्रीडित छन्द है।

विद्या की प्रधानता की उदाहरणों द्वारा पुष्टि—

**क्षान्तिश्चेत्कवचेन किं किमरिभिः क्रोधोऽस्ति चेद्देहिनां**
**ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम्**
**किं सर्पैर्यदि दुर्जनाः किमु धनैर्विद्यानवद्या यदि**
**व्रीडा चेत्किमु भूषणैः सुकविता यद्यस्ति राज्येन किम् ॥१८॥**

अन्वयः—देहिनाम् क्षान्तिः चेत् (अस्ति) कवचेन किम्। क्रोधः चेत् अस्ति अरिभिः किम्? ज्ञातिः चेत् (अस्ति) अनलेन किम्? यदि सुहृत् (अस्ति) दिव्यौषधैः किं फलम्। यदि दुर्जनाः (सन्ति) सर्पैः किम्? यदि अनविद्या विद्या (अस्ति) धनैः किम्? व्रीडा चेत् (अस्ति) भूषणैः किम्? यदि सुकविता अस्ति, (तर्हि) राज्येन किम्?

संस्कृत-व्याख्या—देहिनां—प्राणिनाम्, क्षान्तिः—क्षमा, चेत्—यदि, (अस्ति तर्हि) कवचेन—कर्मणा, किम्—को लाभः? क्रोधः—कोपः, चेत्, अस्ति—विद्यते, (तर्हि) अरिभिः—शत्रुभिः, किम्? ज्ञातिः—दायादः, चेत् (अस्ति तर्हि) अनलेन—अग्निना, किम्? यदि—चेत्, सुहृत्—मित्रम् (अस्ति तर्हि) दिव्यौषधैः—सिद्धौषधैः, किं फलम्—किम्प्रयोजनम्? यदि—चेत्, दुर्जनाः—खलाः (सन्ति तर्हि), सर्पैः—भुजङ्गैः, किम्? यदि, अनवद्या—अनिन्द्या, विद्या—ज्ञानम्, (अस्ति तर्हि) धनैः—वित्तैः, किम्? व्रीडा—लज्जा, चेत् (अस्ति तर्हि), भूषणैः—अलङ्कारैः, किम्? यदि, सुकविता—सुन्दरं कवित्वम्, अस्ति, (तर्हि) राज्येन—भूमण्डलाधिपत्येन, किम्?

अनुवाद—यदि मनुष्य के पास क्षमा है तो कवच की क्या आवश्यकता? यदि क्रोध है तो शत्रुओं की क्या कमी? यदि सगे-सम्बन्धी लोग हैं तो अग्नि का क्या प्रयोजन? यदि मित्र हैं तो उत्तम ओषधियों का क्या प्रयोजन? यदि

(साथ में) दुष्ट लोग हैं तो साँपों की क्या आवश्यकता ? यदि निष्कलंक विद्या है तो धन की क्या आवश्यकता ? यदि (मनुष्य में) लज्जा है तो आभूषणों का क्या प्रयोजन ? यदि काव्य करने की शक्ति है तो राज्य की क्या आवश्यकता ?

If men have forgiveness, what is the use of armour (to them), if they have anger, why should they require enemies ? If there are relations what is the necessity of fire ? If there is friend, what is the use of the efficacious medicines ? If there are villains, what is the use of serpents ? If there is flawless learning, what is the necessity of wealth ? What is the use of ornaments (to men) if they have the sense of modesty ? If they have sweet poetry, what have they to do with a kingdom ?

संस्कृत-भावार्थ—क्षमाशीलानां पुरुषाणां कृते कवचस्य नावश्यकता। अनर्थकारके क्रोधे विद्यमाने शत्रवः किं नाम तस्मादधिकमनर्थं कर्तुं शक्नुयुः ? स एव क्रोधः अन्तःशत्रुत्वात् उपद्रवहेतुः। दायादाः अग्निवत् सन्तापयन्ति। हितकारिणि मित्रे सति हितप्राप्त्यर्थं दिव्यौषधसेवनं निष्फलमेव, मित्रमेव आरोग्यकरम्। प्राणहतो नाम सर्पाणां कार्यं दुर्जनैरेव क्रियते, अतो दुर्जनेषु सत्सु सर्पाणां आवश्यकता का ? खला एव प्राणापहारिणः। सर्वार्थसाधिकायामनवद्यायां विद्यायां सत्यां धनस्य किं प्रयोजनं स्यात् ? विद्या एव अखिलभोगकरी। व्रीडायां विद्यमानायां भूषणानां प्रयोजनमेव किम् ? सा एव लोकोत्तरभूषणम्। सत्कवितागुणे सति नाने राज्यं व्यर्थमेव, यतो हि सत्कविता एव सकललोकवशीकरी।

टिप्पणी—(१) देहिनाम्—प्राणियों के। देह+इनिः=देहिनः, तेषाम्। शेषे षष्ठी। (२) क्षान्तिः—क्षमा। √क्षम्+क्तिन् भावे। (३) कवचेन किम्—कवच से क्या लाभ। यहाँ 'गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका' इस नियम से करण में तृतीया हुई, क्योंकि साधनक्रिया गम्यमान है, जिसके प्रति कवच करण है। कवचेन किं साध्यते न किमपीत्यर्थः। इसी प्रकार 'अरिभिः', 'अनलेन', 'औषधैः', 'सर्पैः', 'धनैः', भूषणैः' में भी करणे तृतीया है। (४) ज्ञातिः—सगे-सम्बन्धी, दायाद। ये लोग अग्नि के समान उत्तापक होते हैं। √ज्ञा+क्तिच् कर्तरि=ज्ञातिः। (५) सुहृत्—मित्र। शोभनं हृदयं यस्य सुहृद् (प्रा० ब० स०), 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इत्यनेन हृदयस्य हृद्भावः। (६) अनवद्या—अनिन्द्य, निष्कलंक। अ√वद्+यत् 'अवद्यपण्यवर्यागर्ह्यपणित-

ष्यानिरोधेषु' इत्यनेन, टाप्=अवद्या, न अवद्या अनवद्या (न० त०)। (७) सुकविता—सुन्दर कविता या रचना-शक्ति। कवयति वर्णयति इति कविः √कव्+इन्। शोभनः कविः सुकविः (प्रा० स०), सुकवेर्भावः सुकविता सुकवि+तल्+टाप्। (८) राज्येन किम्—राज्य से क्या लाभ। राज्ञः भावः कर्म वा राज्यम् राजन्+यक्।

इस श्लोक में शार्दूलविक्रीडित छन्द है।

विशेष—यहाँ कवि ने क्षान्ति आदि के द्वारा कवच आदि की व्यर्थता बताकर धन की गौणता और विद्या की मुख्यता स्थापित की है।

लोक-व्यवहार के लिए उचित मर्यादा आवश्यक है—

**दाक्षिण्यं स्वजने दया परिजने शाठ्यं सदा दुर्जने**
**प्रीतिः साधुजने नयो नृपजने विद्वज्जने आर्जवम्।**
**शौर्यं शत्रुजने क्षमा गुरुजने कान्ताजने धृष्टता**
**ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः ॥१६॥**

अन्वय—स्वजने दाक्षिण्यम्, परिजने दया, दुर्जने सदा शाठ्यम्, साधुजने प्रीतिः, नृपजने नयः, विद्वज्जने आर्जवम्, शत्रुजने शौर्यम्, गुरुजने क्षमा, कान्ताजने धृष्टता, एवम् कलासु ये च पुरुषाः कुशलाः तेषु एव लोकस्थितिः अस्ति।

संस्कृत-व्याख्या—स्वजने—बन्धुजने, दाक्षिण्यं—छन्दानुवर्तनम् औदार्यं वा, परिजने—भृत्यवर्गे, दया—कृपा, दुर्जने—दुष्टेषु, सदा—सर्वदा, शाठ्यं—शठता, साधुजने—सज्जनेषु, प्रीतिः—स्नेहः, नृपजने—राजसु, नयः—नीतिः नीतिपालनमिति यावत्, विद्वज्जने—पण्डितवर्गे, आर्जवं—सरलता, शत्रुजने—अरिषु, शौर्यं—विक्रमः, गुरुजने—पित्रादिषु, क्षमा—सहनशीलता, कान्ताजने—स्त्रीषु, धृष्टता—प्रागल्भ्यम्, एवम्—इत्थं, कलासु—शिल्पेषु, ये च, पुरुषाः—मनुष्याः, कुशलाः निपुणाः (सन्ति), तेषु—पुरुषेषु, एव, लोकस्थितिः—लोकमर्यादा अवतिष्ठते इति शेषः।

अनुवाद—जो अपने लोगों पर अनुकूलता दिखाते, नौकर-चाकरों पर दया दिखाते, दुष्टों के साथ शठता का व्यवहार करते, साधुओं से प्रीति करते, राजाओं के प्रति नीति के साथ बर्ताव करते, विद्वानों के प्रति सिधाई से पेश आते, शत्रुओं

के प्रति वीरता दिखाते, अपने गुरुजनों के प्रति सहनशीलता दिखाते, अपनी कान्ता के प्रति ढिठाई दिखाते, इस तरह से जो लोग वर्णित कलाओं में निपुण होते हैं उन्हीं के ऊपर लोकमर्यादा, लोकस्थिति का भार रहता है।

The stability of the social order solely depends upon those men who are thus expert in the following fine arts—courtesy towards their relations, kindness towards attendants, cunning always towards the wicked, affection for the good, diplomacy towards kings, simplicity or straightforwardness towards the learned, bravery towards enemies, forbearance or endurance towards elders; boldness towards beloved women.

संस्कृत-भावार्थ—ये पुरुषाः बन्धुवर्गे दाक्षिण्यं, भृत्यवर्गे दयां, दुर्जने शाठ्यं, साधुजने प्रीतिं, शासकवर्गे नीतिप्रयोगं, विद्वत्सु सरलतां, शत्रुषु विक्रमं, गुरुषु सहनशीलतां, स्त्रीषु धूर्ततां विदधति त एव लोकव्यवस्थासंस्थापकाः भवन्ति अर्थात् एवंभूता विद्वांस एव लोकान् विनयं शिक्षयितुं प्रभवन्ति।

टिप्पणी—(१) स्वजने—बन्धुओं के प्रति। स्वस्य जनः (ष० त०) वा स्व. जन. (कर्म० स०), तस्मिन्। विषयाधिकरणे सप्तमी। जातौ एकवचनम्। इस प्रकार 'परिजने', 'दुर्जने' आदि में भी समझना चाहिए। (२) दाक्षिण्यम्—अनुकूलता या उदारता। दक्षिणस्य भावः दाक्षिण्यम् दक्षिण+ष्यञ्। (३) दया—√दय्+षङ्+टाप्। (४) शाठ्यम्—शठता। शठस्य भावः शाठ्यम् शठ+ष्यञ्। (५) साधुजने—साधुः जनः (कर्म० स०) अथवा साधुः एव जनः (मयूरव्यंसकादित्वात् रूपकरूपः समासः)। (६) नयः—नीति। √नी+अच्। (७) आर्जवम्—सिधाई। ऋजोः भाव. आर्जवम् ऋजु+अण्। (८) शौर्यम्—वीरता। शूरस्य भावः शौर्यम् शूर+ष्यञ्। (९) कान्ताजने धृष्टता—स्त्रियों के साथ धृष्टता। कहीं 'नारीजने धूर्तता' पाठ है। (१०) लोकस्थितिः—लोगों की स्थिति अर्थात् सामाजिक नियमों की स्थिरता। लोकस्य स्थितिः (ष० त०)।

इस श्लोक में शार्दूलविक्रीडित छन्द है।

सत्संग की महिमा—

जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति।

चेतः प्रसादयति दिक्षु तनोति कीर्तिम्
सत्सङ्गतिः कथय किं न करोति पुंसाम् ॥६०॥

अन्वय—(सत्संगतिः) धियः जाड्यम् हरति, वाचि सत्यम् सिञ्चति, मानोन्नति दिशति, पापम् अपाकरोति, चेतः प्रसादयति, दिक्षु कीर्त्तिम् तनोति, कथय सत्संगतिः पुंसाम् किम् न करोति ?

संस्कृत-व्याख्या—(सत्संगतिः) धियः—बुद्धेः, जाड्यं—मान्द्यं, हरति—नाशयति, वाचि—वाण्यां, सत्यं—सूनृतभावं, सिञ्चति—क्षरति, मानोन्नतिम्—आदरस्य वृद्धि, दिशति—प्रयच्छति, पापं—पाप्मानम्, अपाकरोति—दूरीकरोति, चेतः—चित्तं, प्रसादयति—निर्मलयति, दिक्षु—दिशासु, कीर्तिं—यशः, तनोति—विस्तारयति, कथय—ब्रूहि, सत्संगतिः—सत्संगः, पुंसां—पुरुषाणां, किं (कार्यं), न करोति—न साधयति ?

अनुवाद—सत्संगति बुद्धि की जड़ता हरती है, वाणी में सत्यता सींचती है, मान बढ़ाती है, पाप को दूर भगाती है, मन को प्रसन्न करती है, सब दिशाओं में कीर्ति फैलाती है। भला कहो, सत्संगति मनुष्यों की कौन-सी भलाई नहीं करती।

Good company removes the dullness of intellect; infuses truth into speech; bestows high honour, romoves sin, clarifies or Purifies the mind, spreads fame in all directions. Say what does not good company do for men ?

संस्कृत-भावार्थ—सद्भिः सह संगतिः मनुष्याणां बुद्धिमान्द्यं नाशयति, वाचि सत्यतां स्थापयति, मानवृद्धि करोति, पापं नाशयति, मनः आनन्दयति तथा यशो वर्धयति। अतः सज्जनैः सह एव संगतिः कर्त्तव्या न तु कदापि दुर्जनैः सह।

टिप्पणी—(१) सत्संगतिः—सज्जनों का साथ। सतां संगतिः (ष० त०) अथवा सती संगतिः (कर्म० स०)। √अस्+लट्—शतृ=सन्तः, तेषाम्। सम् √गम्+क्तिन् भावे=संगतिः। (२) धियः जाड्यम्—बुद्धि की जड़ता या मन्दता को। जडस्य भावः जाड्यम् जड+ष्यञ्। (३) वाचि सत्यं सिञ्चति—वाणी में सत्य को सींचती है अर्थात् मनुष्य को सत्यवादी बनाती है। सत्+यत् =सत्यम्। (४) दिशति—देती है। √दिश्+लट्—तिप्। (५) प्रसादयति—प्रसन्न करती है। प्र√सद्+णिच्+लट्—तिप्। (६) पुंसाम्—मनुष्यों का।

√पू+डुमसुन्=पुमांसः, तेषाम् । सम्बन्धे षष्ठी । (७) किं न करोति—(सत्संगति) क्या नहीं करती है अर्थात् सब कुछ करती है । अन्यत्र भी कहा है—'महाजनस्य संसर्गः कस्य नोन्नतिकारकः', 'सतां हि संगः सकलं प्रसूते', 'त्यज दुर्जनसंसर्गं भज साधुसमागमम्' ।

इस श्लोक के प्रथम तीन चरणों में बहुत-सी क्रियाओं का एक ही कर्त्ता होने से दीपक अलंकार है । 'सैव क्रियासु बह्वीषु कारकस्येति दीपकम्' । और इसके अन्तिम चरण में अर्थान्तरन्यास अलंकार है। इसमें वसन्ततिलका छन्द है ।

कवियों की महिमा—

**जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः ।**
**नास्ति येषां यशःकाये जरामरणजं भयम् ॥२१॥**

अन्वय—ते सुकृतिनः रससिद्धाः कवीश्वराः जयन्ति । येषाम् यशःकाये जरामरणजम् भयम् नास्ति ।

*संस्कृत-व्याख्या—ते—प्रसिद्धाः, सुकृतिनः—पुण्यवन्तः, रससिद्धाः—शृङ्गारादिरसेषु सिद्धाः पारङ्गताः, कवीश्वराः—कविश्रेष्ठाः, जयन्ति—सर्वोत्कर्षेण वर्तन्ते, येषां—कवीश्वराणां, यशःकाये—कीर्तिशरीरे, जरामरणजं—वार्धक्यमरणाभ्यां जातं, भयं—भीतिः, नास्ति—न विद्यते ।*

अनुवाद—वे सुकृती (पुण्यवान्) शृङ्गारादि रसों में सिद्ध कवीश्वर विजयी होते हैं, जिनके यशरूपी शरीर में जरा-मरण का भय नहीं रहता ।

Victorious are those blessed lords of the poets accomplished in sentiments whose body of fame has no fear due to old age and death.

संस्कृत-भावार्थ—शृङ्गारादिरसेषु सिद्धहस्ताः वा 'रसो वै सः' इति श्रुतेः ब्रह्मसाक्षात्कारवन्तः ते प्रसिद्धाः व्यासवाल्मीकिकालिदासप्रभृतयः कवीश्वराः सर्वोत्कर्षेण [illegible] । यतो हि तेषां यशः शरीरं कल्पान्तस्थायि ।

टिप्पणी—(१) सुकृतिनः—पुण्यात्मा । सु√कृ+क्त भावे=सुकृतम् । सुकृतम् अस्ति एषाम् इति सुकृत+इनि । (२) रससिद्धाः—रसों—शृंगार, वीर आदि (के प्रयोग) में पारंगत अथवा 'रसो वै सः' इस श्रुति के प्रमाण से

रस ब्रह्म का साक्षात्कार करने वाले । सिद्धः रसः यैः ते सिद्धरसाः वा रससिद्धाः (ब० स०) 'वाहिताग्न्यादिषु' इत्यनेन सिद्धशब्दस्य विकल्पेन पूर्वप्रयोगात् । (३) कवीश्वराः—कवियों में श्रेष्ठ । कविषु ईश्वराः (स० त०) अथवा कवीनाम् ईश्वराः (ष० त०) । √ईश्+वरच् 'स्थेशभासपिसकसो वरच्' इत्यनेन इति ईश्वराः । (४) यशःकाये—यश रूपी शरीर में । चीयते अस्मिन् अस्थ्यादिकम् इति कायः √चि+घञ्, चस्य कः । यशोरूपः कायः अथवा यश एव काय. (मयूरव्यंसकादित्वात् रूपकरूप स०), तस्मिन् । (५) जरामरणजम्—वृद्धावस्था तथा मृत्यु से उत्पन्न । √जृ+अङ्+टाप्=जरा । जरा च मरणं च इति जरामरणे (द्व० स०) । ताभ्यां जायते इति जरामरण√जन्+ड=जराम-रणजम् । यहां यह भी तात्पर्य है कि जैसे रस=पारद, रसायनशास्त्र में पारंगत व्यक्ति के शरीर में सिद्धपारदगुटिका के प्रयोग से जरा-मृत्यु का भय नहीं होता है, उसी तरह शृंगारादिरसों के प्रयोग से काव्यरचयिता के यशःशरीर में जरा-मृत्यु का भय नहीं रहता है अर्थात् उनका यश कल्पान्तस्थायी होता है।

इस श्लोक में 'सुकृतिन.' तथा 'रससिद्धाः' में श्लेष अलंकार है । 'जरा मृत्यु का भय क्यो नहीं है इस लिए कि वे रससिद्ध हैं' ऐसी विवक्षा होने से काव्यलिंग अलंकार है । 'काव्यलिङ्गं हेतोर्वाक्यपदार्थता' । इसमें अनुष्टुप् छन्द है । छन्द का लक्षण—'श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम् । द्विचतुःपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥'

## अथ मानशौर्यपद्धतिः

क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्रायोऽपि कष्टां दशा-
मापन्नोऽपि विपन्नदीधितिरपि प्राणेषु नश्यत्स्वपि
मत्तेभेन्द्रविभिन्नकुम्भपिशितग्रासैकबद्धस्पृहः
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केसरी ॥२२॥

अन्वय—क्षुत्क्षामः अपि जराकृशः अपि शिथिलप्रायः अपि कष्टाम् दशाम् आपन्नः अपि विपन्नदीधितिः अपि प्राणेषु नश्यत्सु अपि मत्तेभेन्द्रविभिन्नकुम्भ-पिशितग्रासैकबद्धस्पृहः मानमहताम् अग्रेसरः केसरी किम् जीर्णम् तृणम् अत्ति ?

संस्कृत-व्याख्या—क्षुत्क्षामः अपि—क्षुधा बुभुक्षया क्षामः अपि क्षीणः अपि, जराकृशः—जरया वार्धक्येन कृशः अपि दुर्बलः अपि, शिथिलप्राणः अपि—बाहुल्येन विश्लथदेहः अपि, कष्टां—कष्टकारिणीं, दशाम्—अवस्थाम्, आपन्नोऽपि—प्राप्तोऽपि, विपन्नदीधितिः अपि—नष्टकान्तिः अपि, प्राणेषु—असुषु, नश्यत्सु अपि—बहिर्गच्छत्सु अपि, मत्तेभेन्द्रविभिन्नकुम्भपिशितग्रासैकबद्धस्पृहः अपि—मत्तः मदमत्तः इभेन्द्रः गजेन्द्रः तस्य विभिन्नौ विदारितौ कुम्भौ मस्तकोन्नतभागौ तयोः पिशितं मांसं तस्य ग्रासे भक्षणे एकं मुख्यं यथा तथा बद्धा निहिता स्पृहा वाञ्छा यस्य तादृशः, मानमहतां—मानेन आत्मसम्मानेन महताम् उन्नतानाम्, अग्रेसरः—अग्रगण्यः, केसरी—सिंहः, किम्, जीर्णं—पुराणं शुष्कमिति यावत्, तृणं—घासम्, अत्ति—खादति ?

अनुवाद—यद्यपि सिंह क्षुधा से पीड़ित रहता, बुढ़ापे के मारे निर्बल बन जाता, शिथिलप्राय हो बड़ी दुर्दशा में रहता; उसका सारा तेज नष्ट हो जाता, जान जाने-जाने को हो जाती है, तो भी मानधनियों में अग्रगण्य वह केसरी मदमत्त गजेन्द्र के मस्तक को फाड़कर उसके ही मांस को खाने की इच्छा करता है; क्या कभी वह सूखी घास खाता है ?

Though parched with hunger, emaciated with old age, almost languid, reduced to a sad plight, with all energy lost and life perishing, will the lion, the first and foremost among those great in self-respect ever eat the withered grass; when his desire is solely fixed on eating the flesh of the cloven temple of the infatuated lordly elephant by tearing it with its claws

संस्कृत-भावार्थ—जराजर्जरो बुभुक्षापीडितो मरणासन्नोऽपि सिंहः स्वयं हतैर्गजैरेव जीवनं यापयन् शुष्कतृणानि भक्षयितुं न कदापि उत्साहशीलो भवति स्वाभिमानित्वात् । तथैव नरेण आत्मसम्मानिना भवितव्यम् ।

टिप्पणी—(१) क्षुत्क्षामः—भूख के कारण क्षीण । √क्षुध्+क्विप्=क्षुत्, तया । √क्षै+क्त, तस्य मः 'क्षायो मः' इत्यनेन=क्षामः । क्षुधा क्षामः (तृ० त०) । (२) जराकृशः—वृद्धावस्था के कारण दुर्बल । √जॄ+अङ् 'षिद्भिदादिभ्योऽङ्' इत्यनेन, ततष्टाप्=जरा । √कृश्+क्त कर्तरि 'अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः' इति सूत्रेण निपातनात् साधुः=कृशः । जरया कृशः (तृ० त०) ।

(३) शिथिलप्रायः—बहुत ही दुर्बल या शिथिल। प्रायेण शिथिलः इति शिथिलप्रायः (सुप्सुपा स०)। 'प्रायो बाहुल्यतुल्ययोः' इति मेदिनी। प्राय शब्द का प्रयोग बाहुल्य एवं तुल्य अर्थ में होता है। यथा बाहुल्य—शालिप्रायो देशः—धान से भरा हुआ देश। तुल्य—वर्षशतप्रायं दिनम्—सौ वर्ष के बराबर दिन। इसका अर्थ करीब-करीब भी होता है। जैसे, मृतप्राय, शिथिलप्राय आदि। (४) कष्टां दशाम्—कष्ट देने वाली अवस्था को। कष्टम् अस्ति अस्याम् इति कष्टा कष्ट+अच् अर्शआदित्वात्, ततः टाप्, ताम्। (५) आपन्नः—प्राप्त। आ√पद्+क्त 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इति सूत्रेण तस्य नः। (६) विपन्नदीधितिः—कान्ति या तेज से हीन। विपन्ना दीधितिः यस्य सः (ब० स०)। (७) प्राणेषु नश्यत्सु—अत्र भावे सप्तमी 'यस्य च भावेन भावलक्षणम्' इति सूत्रेण। प्राण शब्द का प्रयोग सदा बहुवचन में होता है। (८) मत्तेभेन्द्रविभिन्नकुम्भपिशितग्रासैकबद्धस्पृहः—मतवाले गजराज के मस्तक को फाड़कर उसके मांस को खाने की एकमात्र इच्छा रखने वाला। इभानाम् इन्द्रः इभेन्द्रः (ष० त०)। विभिन्नौ कुम्भौ (कर्म० स०)। मत्ताः इभेन्द्राः (कर्म० स०), मत्तेभेन्द्रस्य विभिन्नकुम्भौ (ष० त०), तयोः पिशितम् (ष० त० वा स० त०), तस्य ग्रासः (ष० त०)। एकं यथा तथा बद्धा इति एकबद्धा (सुप्सुपा स०)। मत्तेभेन्द्रविभिन्नकुम्भपिशितग्रासे एकबद्धा स्पृहा यस्य सः (ब० स०)। √मद्+क्त कर्तरि=मत्त। √भिद्+क्त=भिन्न। √ग्रस्+घञ्=ग्रास। √बन्ध्+क्त=बद्ध। √स्पृह्+अङ+टाप्=स्पृहा। (९) मानमहताम्—महान् स्वाभिमानियों का। मानेन महान्तः (तृ० त०), तेषाम्। (१०) अग्रेसरः—अग्रगण्य, प्रधान। अग्रेसरतीति अग्रेसरः अग्रे√सृ+ट 'पुरोऽग्रतोऽग्रेषु सर्तेः' इत्यनेन। (११) केसरी—सिंह। केसराः (अयाल) सन्ति अस्य इति केसरी केसर+इनि।

इस श्लोक में अप्रस्तुतप्रशंसा अलंकार है। इसमें शार्दूलविक्रीडित छन्द है।

फल की आकांक्षा भी पुरुषार्थ के अनुरूप होती है—

स्वल्पस्नायुवसावसेकमलिनं निर्मांसमप्यस्थिकं
श्वा लब्ध्वा परितोषमेति न च तत्तस्य क्षुधाशान्तये।

**सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं**
**सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम् ॥२३॥**

**अन्वय**—श्वा स्वल्पस्नायुवसावसेकमलिनम् निर्मांसम् अपि अस्थिकं लब्ध्वा परितोषम् एति । तत् च तस्य क्षुधाशान्तये न अस्ति । सिंहः अङ्कम् आगतम् अपि जम्बुकम् त्यक्त्वा द्विपम् निहन्ति । कृच्छ्रगतः अपि सर्वः जनः सत्त्वानुरूपम् फलम् वाञ्छति ।

**संस्कृत-व्याख्या**—श्वा—कुक्कुरः, स्वल्पस्नायुवसावसेकमलिनं—स्वल्पयोः लेशमात्रयोः स्नायुवसयोः वस्नसामेदसोः अवसेकेन मेलनेन मलिनं मलदूषितं, निर्मांसम् अपि—मांसरहितम् अपि, अस्थिकं—कुत्सितं कीकसं, लब्ध्वा—प्राप्य, परितोषं—सन्तोषम्, एति—प्राप्नोति, तत्—अस्थि, च, तस्य—शुनः, क्षुधाशान्तये—बुभुक्षानिवारणाय, नास्ति—न भवति। सिंहः—केसरी, अङ्कं—क्रोडम्, आगतमपि—आयातमपि, जम्बुकं—शृगालं, त्यक्त्वा—विहाय, द्विपं—हस्तिनं, निहन्ति—मारयति । कृच्छ्रगतः—संकटस्थः, अपि, सर्वः—निखिलः, जनः—लोकः, सत्त्वानुरूपं—स्वशक्त्यनुगुणं, फलं—लाभं, वाञ्छति—काङ्क्षति ।

**अनुवाद**—ताँत और चर्बी की कुछ-कुछ मिलावट के कारण मैली एवं मांस-रहित हड्डी के टुकड़े को पाकर कुत्ता संतुष्ट हो जाता है, पर इससे उसकी क्षुधा शान्त नहीं होती । सिंह अपनी गोद में आये हुए शृगाल को छोड़ कर हाथी को ही मारता है । विपत्तिग्रस्त होने पर भी सब कोई अपने बल के योग्य ही फल की कामना करता है ।

On getting even a little bone, fleshless and dirty, with a little sprinkling of fat and muscles, a dog is well satisfied although it does not satisfy his hunger. (But) a lion kills an elephant, leaving a jackal though fallen into his clutches. Everybody, though in difficulty, wishes for a fruit according to his own greatness of heart.

**संस्कृत-भावार्थ**—श्वा निर्मांसं क्षुद्रम् अस्थि प्राप्य परितुष्यति तथा सिंहः अङ्कमागतमपि जम्बुकं परित्यज्य गजं हन्ति। अत एवं ज्ञायते यत् न दुर्बलः उत्तमफलाकाङ्क्षी न च प्रबलः निकृष्टफलाभिलाषी च भवति अपि तु सर्वे लोकाः स्वसामर्थ्यानुसारं स्वां-स्वां प्रकृतिमेवाश्रयन्ति ।

टिप्पणी—(१) स्वल्पस्नायुवसावलेपमलिनम्—तांत और चर्बी के बचे हुए थोड़े से भाग (के लगे रहने) से गंदी। स्नायुः च वसा च इति स्नायुवसे (द्व० स०), स्वल्पे स्नायुवसे (कर्म० स०), स्वल्पस्नायुवसयोः अवलेपः (षं० त०), तेन मलिनम् (तृ० त०)। यह 'अस्थिकं' का विशेषण है। (२) निर्मांसम्—मांसरहित। निर्गतं मांसं यस्मात् तत् (ब० स०)। (३) अस्थिकम्—हड्डी का टुकड़ा। कुत्सितम् अस्थि इति अस्थिकम् अस्थि+कन् कुत्सार्थे। (४) क्षुधाशान्तये—भूख मिटाने के लिए। √क्षुध्+क्विप्+टाप् (भागुरिमतेन) =क्षुधा। 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः। आपं चैव हलन्तानां यथा वाचा निशा दिशा।' क्षुधायाः शान्तिः (ष० त०), तस्यै। (५) सिंहः—हिनस्ति जन्तून् इति सिंहः√हिंस्+अच्, पृषोदरादित्वात् वर्णविपर्ययः। 'भवेद् वर्णागमाद् हंसः सिंहो वर्णविपर्ययात्। गूढोत्मा वर्णविकृतेः वर्णलोपात् पृषोदरः।' (६) द्विपम्—हाथी को। द्वाभ्यां मुखशुण्डाभ्यां पिबति इति द्वि√पा+क=द्विपः, तम्। (७) सत्त्वानुरूपम्—(अपनी) शक्ति के अनुसार। अनुगतं रूपम् इति अनुरूपम् (प्रा० स०), सत्त्वस्य अनुरूपम् (ष० त०)।

इस श्लोक में 'सर्वः कृच्छ्रगतः……इत्यादि सामान्य उक्ति से प्रथम तीन चरणों की विशेष उक्ति का समर्थन किया गया है, अतएव अर्थान्तरन्यास अलंकार है। इसमें शार्दूलविक्रीडित छन्द है।

उत्तम-अधम का निदर्शन—

लाङ्गूलचालनमधश्चरणावपातम्
भूमौ निपत्य वदनोदरदर्शनं च।
श्वा पिण्डदस्य कुरुते गजपुंगवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते॥२४॥

अन्वयः—श्वा लाङ्गूलचालनम् अधश्चरणावपातम् भूमौ निपत्य वदनोदरदर्शनम् च पिण्डदस्य कुरुते। गजपुंगवः तु धीरम् विलोकयति चाटुशतैः च भुङ्क्ते।

संस्कृत-व्याख्या—श्वा—कुक्कुरः, लाङ्गूलचालनं—पुच्छविवर्तनम्, अधश्चरणावपातम्—अधः नीचैः चरणावपातं चरणयोः पादयोः अवपातः पतनम्

तम्, भूमौ—पृथिव्यां, निपत्य—पतित्वा, वदनोदरदर्शनं च—मुखकुक्षिप्रदर्शनं च, पिण्डदस्य—अन्नदातुः (पुरतः), कुरुते—विदधाति । गजपुंगवः—हस्तिश्रेष्ठः, तु, धीरं—गम्भीरं यथा स्यात् तथा, विलोकयति—पश्यति, चाटुशतैः—बहुभिः प्रियोक्तिभिः, च, भुङ्क्ते—खादति ।

अनुवाद—कुत्ता अपने अन्नदाता के सामने पूंछ हिलाता, उसके पैरों पड़ता और जमीन पर लोट कर उसे अपना मुंह और पेट दिखाता है, परन्तु गजेन्द्र अपने अन्नदाता के प्रति गम्भीरतापूर्वक ताकता और बहुत ललकारने-पुचकारने पर (चारा) खाता है।

A dog wags his tail, falls down at the feet, and falling on ground exhibits his face and paw to his bread-giver but a lordly (an excellent) elephant looks seriously or gravely and eats when cajoled with hundreds of coaxing words.

संस्कृत-भावार्थ—श्वा भोजनार्थम् अन्नदातुः पुरतः पादपतनादिनीचचेष्टां करोति, किन्तु गजराजः पिण्डदस्य सन्निधौ धीरं विलोकयति अनेकैरभ्यर्थनोपचारैश्च खादति । इत्थमेव अधमप्रकृतिर्जनः भोजयितुः पुरः स्वीयां चञ्चलतां क्षुद्रतां च दर्शयति उत्तमप्रकृतिस्तु गजेन्द्र इव गम्भीरतां मानितां च प्रकटयति ।

टिप्पणी—(१) लाङ्गूलचालनम्—पूंछ हिलाना । लाङ्गूलस्य चालनम् (ष० त०) । (२) अधश्चरणावपातम्—नीचे पैरों पर गिरना । अव√पत्+घञ्=अवपातः, चरणयोः अवपातः (स० त०), अधः चरणावपातः (सुप्सुपा स०), तम् । (३) वदनोदरदर्शनम्—मुंह और पेट दिखाना । वदनं च उदरं च, तयोः समाहारः वदनोदरम् (द्व० स०) एकवद्भावश्च 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इत्यनेन । वदनोदरस्य दर्शनम् (ष० त०), तत् । (४) पिण्डदस्य—भोजन देने वाले के । इसके आगे 'पुरतः' या 'सम्मुखे' पद का अध्याहार कर लेना चाहिए । पिण्डं ददातीति पिण्डदः पिण्ड√दा+क, तस्य । (५) गजपुंगवः—गजराज । पुमान् गौः इति पुंगवः श्रेष्ठः (कर्म० स०), 'गोरतद्धितलुकि' इत्यनेन समासान्तः टच्प्रत्ययः । 'स्युरुत्तरपदे व्याघ्रपुंगवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः' इत्यमरः । गजः पुंगव इव इति गजपुंगवः (उपमित स०) 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' इत्यनेन । (६) धीरम्—गंभीरतापूर्वक । यह

'विलोकयति' क्रिया का विशेषण है, अतएव इसमें द्वितीया हुई। (७) चाटुशतैः—सैकड़ों अनुनय-विनय के वचनों या खुशामदों से। चाटूनां शतानि (ष० त०), तैः करणे तृतीया।

इस श्लोक में अप्रस्तुतप्रशंसा का भेद अन्योक्ति अलंकार है। इसमें वसन्ततिलका छन्द है।

जन्म का साफल्य—

**परिवर्तिनि संसारे मृतः को वा न जायते।**
**स जातो येन जातेन याति वंशः समुन्नतिम् ॥२५॥**

अन्वयः—परिवर्तिनि संसारे कः न मृतः वा न जायते। स जातः येन जातेन वंशः समुन्नतिम् याति।

संस्कृत-व्याख्या—परिवर्तिनि—परिवर्तनशीले, संसारे—जगति, कः—पुरुषः, न, मृतः—म्रियते, वा अथवा, न जायते—न उत्पद्यते। सः—पुरुषः, जातः—उत्पन्नः, येन, जातेन—उत्पन्नेन, वंशः—कुलं, समुन्नतिम्—उत्कर्षं, याति—प्राप्नोति।

अनुवाद—इस परिवर्तनशील संसार में कौन नहीं मरता और कौन नहीं जन्मता? पर यहाँ उसी का जन्म लेना सफल है जिसके जन्म लेने से वंश की उन्नति हो।

In this ever-changing world, who is not born and who is not dead? He alone is (truly) born, by whose birth the family attains eminence.

संस्कृत-भावार्थ—यः स्ववंशम् उद्धारयति तस्यैव जन्म सार्थकम्, अन्यथा परिवर्तनशीले जगति जन्म-मरणे तु अपरिहार्ये एव। तत्र को विशेषः?

टिप्पणी—(१) परिवर्तिनि—परिवर्तनशील। परिवर्तितुं शीलमस्य इति परिवर्ती परि√वृत्+णिनि कर्तरि ताच्छील्ये, तस्मिन्। (२) संसारे—संसरत्यस्मात् इति संसारः सम्√सृ+घञ्, तस्मिन्। (३) येन जातेन—जिसके पैदा होने से। अत्र करणे हेतौ वा तृतीया। (४) समुन्नतिम्—उत्कर्ष को। सम्-उद्√नम्+क्तिन् भावे=समुन्नतिः, ताम्।

इस श्लोक में अनुष्टुप् छन्द है ।

मनस्वी की दो गतियाँ—

**कुसुमस्तबकस्येव द्वयी वृत्तिर्मनस्विनः ।**
**मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥२६॥**

अन्वयः—कुसुमस्तवकस्य इव मनस्विनः द्वयी वृत्तिः। सर्वलोकस्य मूर्ध्नि वा, वने एव शीर्यते वा ।

संस्कृत-व्याख्या—कुसुमस्तवकस्य—पुष्पगुच्छस्य, इव—तद्वत्, मनस्विनः—धीरस्य, द्वयी—द्विविधा, वृत्तिः—व्यापारः । सर्वलोकस्य—सर्वेषां जनानां, मूर्ध्नि—मस्तके, वा—अथवा, वने—अरण्ये एव, शीर्यते वा—जीर्यति वा ।

अनुवाद—फूल के गुच्छों की भाँति मनस्वियों की दो ही गतियाँ हैं । या तो सब लोगों के सिर पर चढ़ें या वन ही में मुरझा जायें ।

There is only twofold course of action of the highminded, like that of a bunch of flowers—to be on the head of all or to wither away in a forest.

संस्कृत-भावार्थ—मनस्वी जनः सर्वेभ्यः उत्कर्षं प्राप्तुं प्रयतते एकाकी वा भूत्वा शरीरं त्यक्तुमभिलषति। इयमेव पुंसां श्रेयस्करी वृत्तिः ।

टिप्पणी—(१) कुसुमस्तवकस्येव—फूलों के गुच्छों के समान । कुसुमानां स्तवकः (ष० त०), तस्य इव 'नित्यसमासः षष्ठ्याः अलोपश्च' 'इवेन सह नित्य-समासः विभक्त्यलोपश्च' इति वार्तिकेन । (२) मनस्विनः—महामना या धीर पुरुष की । मनस्+विनि 'अस्मायामेधास्रजो विनिः' इत्यनेन=मनस्वी, तस्य । वृत्तियोगे कर्तरि षष्ठी 'कर्तृकर्मणोः कृति' इत्यनेन (३) द्वयी वृत्तिः—दो वृत्तियाँ या गतियाँ । द्वौ अवयवौ यस्याः सा द्वयी द्वि+तयप् 'संख्याया अवयवे तयप्' इत्यनेन, तस्य अयच् 'द्वित्रिभ्यां तयस्यायज्वा' इत्यनेन, ततः ङीप् । (४) सर्वलोकस्य मूर्ध्नि—सब लोगों के मस्तक पर । सर्वः लोकः (कर्म० स०), तस्य । शेषे षष्ठी । (५) वन एव—वने एव=वन एव । वने के एकार को अय् आदेश होने पर 'लोपः शाकल्यस्य' से यकार का लोप हो गया । (६) शीर्यते—मुरझा जाता है । √शृ (दिवादिगणीय)+लट्—ते ।

इस श्लोक में पूर्णोपमा अलंकार है और अनुष्टुप् छन्द है।

महान् का वैर भी महान् से होता है—

**सन्त्यन्येऽपि बृहस्पतिप्रभृतयः संभाविताः पञ्चषा-**
**स्तान्प्रत्येष विशेषविक्रमरुची राहुर्न वैरायते।**
**द्वावेव ग्रसते दिवाकरनिशाप्राणेश्वरौ भास्वरौ**
**भ्रातः! पर्वणि पश्य दानवपतिः शीर्षावशेषाकृतिः ॥२७॥**

अन्वयः—अन्ये बृहस्पतिप्रभृतयः अपि पञ्चषाः संभाविताः सन्ति तान् प्रति एषः विशेषविक्रमरुचिः राहुः न वैरायते। भास्वरौ द्वौ दिवाकर-निशाप्राणेश्वरौ एव शीर्षावशेषाकृतिः दानवपतिः पर्वणि ग्रसते इति हे भ्रातः! पश्य।

संस्कृत-व्याख्या—अन्ये—अपरे, बृहस्पतिप्रभृतयः—गुरुबुधशुक्रादयः, अपि, पञ्चषाः—पञ्च वा षड् वा, संभाविताः—बहुमताः ग्रहाः, सन्ति—विद्यन्ते, तान् प्रति, एषः—असौ, विशेषविक्रमरुचिः—विशेषेषु तेजोगरिष्ठेषु विक्रमेषु पराक्रमेषु रुचिः मनोलग्नता यस्य तादृशः, राहुः—सैंहिकेयः, न वैरायते—न कलहं करोति। भास्वरौ—प्रकाशमानौ, द्वौ—उभौ, दिवाकरनिशाप्राणेश्वरौ—सूर्याचन्द्रमसौ, एव, शीर्षावशेषाकृतिः—शिरोमात्रावशिष्टदेहः, दानवपतिः—दानवेन्द्रो (राहुः), पर्वणि—अमावास्यायां पूर्णिमायां च, ग्रसते—कवलीकरोति, (इति) हे भ्रातः! पश्य—अवलोकय (इदम्)।

अनुवाद—बृहस्पति आदि पांच-छः और प्रतिष्ठित ग्रह भी आकाश में हैं पर अपना विशेष पराक्रम दिखलाने वाला राहु उन सब से वैर नहीं करता। देखो भाई! यह दैत्यराज राहु, जिसका मस्तक ही केवल बचा हुआ है, अमावास्या और पूर्णिमा के दिन प्रकाशमान सूर्य और चन्द्रमा को ही ग्रसता है (और किसी को नहीं)।

There are even others, five or six honourable (planets), Brihaspati and others, but not Rahu, delighting in showing his valour, to distinguished enemies does not declare hostility towards them. See, brother, the lord of demons, with his head as the only remnant part of his body; devours only the two

luminaries, the sun, and the moon on the new-moon day and the full-moon day.

**संस्कृत-भावार्थ**—शिरोमात्रावशिष्टदेहो राहुः सत्स्वपि तेजोगरिष्ठेषु बृहस्पति-प्रभृतिषु ग्रहेषु सूर्याचन्द्रमसौ एव ग्रसते । यतो हि मानी पुरुषो हीनां दशां प्राप्तोऽपि बलिष्ठेष्वेव पराक्रमं दर्शयति न च क्षुद्रेषु ।

टिप्पणी—(१) बृहस्पतिप्रभृतयः—बृहस्पति आदि । बृहस्पतिः प्रभृतिः येषां ते (ब० स०) । बृहतां पतिः बृहस्पतिः (ष० त०), 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' इति वार्तिकेन सुट् आगमः तकारस्य च लोपः । प्रभृति—स्त्रीलिंग, प्रारंभ होना, अव्यय के रूप में प्रयुक्त होने पर 'अद्यप्रभृति, ततः प्रभृति' इत्यादि प्रयोग होते हैं । (२) पञ्चषाः—पाँच या छह । पञ्च वा षट् वा इति पञ्चषाः (वार्ये बहुव्रीहिः) 'संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये' इत्यनेन, ततः 'बहुव्रीहौ संख्येये डजबहुगणात्' इत्यनेन डच् प्रत्ययः, डित्वाट्टिलोपः । यहाँ बहुवचन क्यों हुआ—इस सम्बन्ध में भाष्यकार आदि का कथन देखिए—'तत्र युक्तं बहुवचनम्' इति भाष्यकारः । 'तदपेक्षं बहुवचनमेव' इति तत्त्वबोधिनी । (३) विशेषविक्रमरुचिः—विशिष्ट व्यक्तियों पर पराक्रम दिखलाने का इच्छुक । विशिष्यते इति विशेषः वि√शिष्+अच् । विशेषेषु विक्रमः (स० त०), तस्मिन् रुचिः यस्य सः (ब० स०) अथवा विशेषः विक्रमः (कर्म० स०), तस्मिन् रुचिः यस्य सः (ब० स०) । इस पक्ष में अर्थ होगा—विशेष पराक्रम का इच्छुक । विशेषविक्रमरुचिः राहुः विशेषविक्रमरुची राहुः 'रो रि' सूत्र से रेफ का लोप तथा 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' सूत्र से दीर्घ । (४) वैरायते—शत्रुता करता है । वैरं करोति इति वैरायते वैर+क्यङ् 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे' इत्यनेन । (५) भास्वरौ—प्रकाशमान । √भास्+वरच् 'स्थेशभासपिसकसो वरच्' इत्यनेन । (६) दिवाकरनिशाप्राणेश्वरौ—सूर्य और चन्द्रमा को । दिवा करोतीति दिवाकरः दिवा√कृ+ट 'दिवाविभानिशाप्रभा—'इत्यादि सूत्रेण । प्राणानाम् ईश्वरः प्राणेश्वरः, निशायाः प्राणेश्वरः (ष० त०), दिवाकरश्च निशाप्राणेश्वरश्च इति (द्व० स०) (७) शीर्षावशेषाकृतिः—जिसका केवल सिर ही बचा हुआ है । शीर्षम् एव अवशेषो यस्याः सा शीर्षावशेषा (ब० स०), तादृशी आकृतिर्यस्य सः (ब० स०) । (८)

दानवपतिः—राहु। दनोः अपत्यं पुमान् इति दानवः दनु+अण्। पातीति पतिः√पा+डति। दानवानां पतिः (ष० त०)।

इस श्लोक में अप्रस्तुतप्रशंसा अलंकार है, क्योंकि राहु के कार्य के वर्णन से दुष्ट मनुष्य के कार्य का बोध होता है। इसमें शार्दूलविक्रीडित छन्द है।

विशेष—पौराणिक कथा है कि समुद्र-मन्थन से अमृत निकलने पर राहु भी उसका पान करने के लिए अपना स्वरूप बदल कर देवताओं की पंक्ति में बैठ गया था। पर सूर्य और चन्द्रमा ने भगवान् विष्णु से उसकी कपट-वृत्ति का भेद बतला दिया। इस पर विष्णु ने सुदर्शन चक्र से उसका सिर काट डाला। किन्तु तब तक वह थोड़ा-सा अमृत पी गया था। इसलिए वह मरा नहीं, बल्कि उसका सिर भाग राहु और धड़ भाग केतु नाम से विख्यात हुआ। कहते हैं कि वही राहु सूर्य और चन्द्रमा से बदला लेने के लिए ग्रहण के समय उन्हें ग्रस लेता है।

महत्ता का परिमाण नहीं होता—

**वहति भुवनश्रेणिं शेषः फणाफलकस्थितां**
**कमठपतिना मध्येपृष्ठं सदा स च धार्यते।**
**तमपि कुरुते क्रोडाधीनं पयोधिरनादरा-**
**दहह! महतां निःसीमानश्चरित्रविभूतयः ॥२८॥**

अन्वय—शेषः फणाफलकस्थिताम् भुवनश्रेणिं वहति। स च कमठपतिना मध्येपृष्ठं सदा धार्यते। तम् अपि पयोधिः अनादरात् क्रोडाधीनम् कुरुते। अहह! महताम् चरित्रविभूतयः निःसीमानः।

संस्कृत-व्याख्या—शेषः—शेषनागः, फणाफलकस्थितां—फणाः स्फटाः फलकानि पट्टानि इव तेषु स्थितां निहितां, भुवनश्रेणिं—चतुर्दशलोकपङ्क्तिं, वहति—धारयति। स च—शेषः, कमठपतिना—महाकच्छपेन, मध्येपृष्ठं—पृष्ठमध्ये, सदा—सर्वदा, धार्यते—उह्यते। तं—कमठपतिम्, अपि, पयोधिः—समुद्रः, अनादरात्—अवहेलनात्, क्रोडाधीनम् अङ्कस्थं, कुरुते—विदधाति। अहह—अद्भुतम्, महतां—महानुभावानां, चरित्रविभूतयः—माहात्म्यसम्पदः, निःसीमानः—निर्मर्यादाः (भवन्ति)।

अनुवाद—शेषनाग अपने विस्तृत फनों पर भुवनावली को ढोते, कच्छपराज इसको अपनी पीठ पर धारण करते, और उसको भी प्रलय-समुद्र अनायास अपनी गोद में ले बैठता है। अहह ! बड़ों की चरित्र-महिमा असीम होती है।

Sesa bears the row of the worlds placed upon the flat surface of his expanded hoods. And he is held on his back by the Lord of the tortoise. Even him the ocean consigns with but scanty regard, to its lap (i. e. to the abyss of its water), or to the boar incarnation. Oh ! Unlimited is the exuberance of the character of the great.

संस्कृत-भावार्थ—शेषनागः स्वफणेषु पातालादिलोकान् धारयति, शेषनागं कच्छपदेवो वहति, कच्छपदेवमपि समुद्रो लीलया क्रोडस्थं करोति। इत्थं मानशौर्यशालिनां महानुभावानां माहात्म्यसम्पदः अवाङ्मनसगोचराः भवन्ति।

टिप्पणी—(१) फणाफलकस्थिताम्—फनों के पटरे पर स्थित। फणाः फलकानि इव इति (उपमित स०), तेषु स्थिता (स० त०), ताम्। (२) भुवनश्रेणिम्—लोकों की श्रेणी अर्थात् चौदह लोकों को। भुवनानां श्रेणिः (ष० त०), ताम्। 'रात्रिः रात्री' की तरह 'श्रेणिः श्रेणी' दोनों शब्द शुद्ध हैं। (३) कमठपतिना—कच्छपराज। कमठानां पतिः (ष० त०), तेन। यहाँ 'पतिः समास एव' सूत्र से घिसंज्ञा हो जाने के कारण तृतीया विभक्ति के टा को ना आदेश हुआ। (४) मध्येपृष्ठम्—पीठ पर। पृष्ठस्य मध्ये इति मध्ये-पृष्ठम् (अव्य० स०) 'पारे मध्ये षष्ठ्या वा' इत्यनेन अत्र एत्वं निपात्यते। असमासे 'मध्ये पृष्ठस्य' इति रूपम्। (५) पयोधिः—समुद्र। पयांसि धीयन्ते अस्मिन् इति पयस्√धा+कि=पयोधिः। (६) अनादरात्—अनादर पूर्वक या अनायास। आ√दृ+अप् 'ग्रहवृदृनिश्चिगमश्च' इत्यनेन=आदरः, न आदरः अनादरः (न० त०), तस्मात्। (७) क्रोडाधीनम्—गोद में अवस्थित। क्रोडे अधि—अत्र 'अधिरीश्वरे' इति सूत्रेण कर्मप्रवचनीयसंज्ञा, 'यस्मादधिकं यस्य चेश्वर-वचनं तत्र सप्तमी' इति सूत्रेण सप्तमी, 'सप्तमी शौण्डैः' इत्यनेन समासः= क्रोडाधि+ख 'अपडक्षाशितङ्ग्वलंकर्मालंपुरुषाध्युत्तरपदात्खः' इत्यनेन, खस्य ईनादेशः। (८) निःसीमानः—सीमारहित या मन-वाणी से परे। निःनास्ति सीमा यासां ताः निःसीमानः (प्रा० ब० स०)।

इस श्लोक में प्रथम तीन चरणों में मालादीपक और अन्तिम चरण में अर्थान्तरन्यास अलंकार हैं। इसमें हरिणी छन्द है। छन्द का लक्षण—'नसमरसला गः षड्वेदैर्हयैर्हरिणी मता'।

औचित्य का विचार होना चाहिए—

वरं पक्षच्छेदः समदमघवन्मुक्तकुलिश-
प्रहारैरुद्गच्छद्बहुलदहनोद्गारगुरुभिः ।
तुषाराद्रेः सूनोरहह ! पितरि क्लेशविवशे
न चासौ संपातः पयसि पयसां पत्युरुचितः ॥२९॥

अन्वयः—उद्गच्छद्बहुलदहनोद्गारगुरुभिः समदमघवन्मुक्तकुलिशप्रहारैः तुषाराद्रेः सूनोः पक्षच्छेदः वरम्। अहह ! पितरि क्लेशविवशे सति पयसाम् पत्युः पयसि असौ संपातः न उचितः।

संस्कृत-व्याख्या—उद्गच्छद्बहुलदहनोद्गारगुरुभिः—उद्गच्छन् उज्जृम्भमाणः बहुलः भूयिष्ठः यो दहनः अग्निः तस्य उद्गारैः निःसरणैः गुरुभिः दुःसहैः, समदमघवन्मुक्तकुलिशप्रहारैः—समदः सगर्वः मघवा इन्द्रः तेन मुक्तः प्रक्षिप्तः कुलिशः वज्रः तस्य प्रहारैः आघातैः, तुषाराद्रेः—हिमालयस्य, सूनोः—पुत्रस्य, पक्षच्छेदः—पक्षकर्तनं, वरं—मनाक् प्रियम्। अहह—खेदे, पितरि—जनके, क्लेशविवशे—क्लेशेन वज्राघातजन्यदुःखेन विवशे विह्वले (सति), पयसाम् पत्युः—समुद्रस्य, पयसि—जले, असौ—अयं, संपातः—प्रवेशः निलीय अवस्थानमिति यावत्, न उचितः—न योग्यः।

अनुवाद—सगर्व इन्द्र के छोड़े हुए वज्र के प्रहार को पाकर—(जो प्रहार अग्नि की बहुत चिनगारियों के छिटकने के कारण बहुत ही भयानक थे)—मर जाना कहीं अच्छा था पर हिमालय के पुत्र का (मैनाक का) अपने विपद्ग्रस्त पिता को क्लेश में छोड़ कर समुद्र के जल में छिप कर बचना उचित नहीं था।

Better it was for the son of the Himalaya to have his wing chopped off by the blows of the thunderbolt hurled down by the proud Indra, the blow which was terrible on account of the outbursts of the violent rising fire. But alas ! it was not proper for him to hide himself by plunging into the water of

the lord of water (i.e. Ocean) when his father was subjected to torture.

**संस्कृत-भावार्थ**—इन्द्रवज्रेण हिमालयस्य पक्षच्छेदे क्रियमाणे सति हिमालय-पुत्रस्य मैनाकस्य स्वप्राणरक्षार्थं समुद्रे निलीय अवस्थानमनुचितमभवत् । तथैव स्वपितरि क्लेशविह्वले सति ये स्वाभिमानिनो जनाः स्वप्राणमात्ररक्षार्थं क्वचित् निलीय अवतिष्ठन्ते तान् धिक् ।

**टिप्पणी**—(१) उद्गच्छद्बहुलदहनोद्गारगुरुभिः—ऊपर उठते हुए अग्नि-पुञ्ज के उद्गार के कारण असह्य । बहुलः दहनः बहुलदहनः (कर्म० स०), उद्गच्छन् बहुलदहनः (कर्म० स०), तस्य उद्गाराः (ष० त०), तैः गुरवः (तृ० त०), तैः । यह 'प्रहारैः' का विशेषण है । (२) समदमघवन्मुक्तकुलिश-प्रहारैः—दर्पयुक्त इन्द्र द्वारा छोड़े गये वज्र के प्रहारों से । √मद्+अप् 'मदो-ऽनुपसर्गात्' इत्यनेन=मदः । √मुच्+क्त कर्मणि=मुक्तः । प्र√हृ+घञ् भावे=प्रहारः । मदेन सह वर्तमानः इति समदः (ब० स० तुल्ययोगे), समदः मघवा (कर्म० स०), तेन मुक्तः (तृ० त०), तादृशः कुलिशः (कर्म० स०), तस्य प्रहारः (ष० त०), तः । (३) तुषाराद्रेः—हिमालय के । तुषारस्य अद्रिः (ष० त०) वा तुषारपूर्णः अद्रिः (मध्य० स०), तस्य । (४) सूनोः—पुत्र का, मैनाक का । (५) पितरि—अत्र भावे सप्तमी । (६) क्लेशविवशे—दुःख से विह्वल या अभिभूत होने पर । विगतः वशः यस्य स विवशः (प्रा० ब० स०), क्लेशेन विवशः क्लेशविवशः (तृ० त०), तस्मिन् । (७) सम्पातः—कूद पड़ना । सम्√पत्+घञ् भावे ।

इस श्लोक में शिखरिणी छन्द है । छन्द का लक्षण—'रसै रुद्रैश्छिन्ना यम-नसभला गः शिखरिणी' ।

**विशेष**—प्राचीन काल में पर्वतों के पंख होते थे, जिससे वे उड़कर कहीं से कहीं चले जाते थे और जहाँ पृथ्वी पर उतरते थे वहाँ जीव-जन्तुओं को नष्ट कर देते थे । इस पर इन्द्र ने अपने वज्र से उनके पंखों को काट डाला । जब हिमालय का पंख काटा जा रहा था, उस समय मैनाक समुद्र में घुसकर छिप गया था । यही अन्तः कथा यहाँ पर है ।

या सहनशीलता के कारण । √क्षम्+क्तिन्=क्षान्तिः, तया । (६) भीरुः—डरपोक । √भी+क्रुक् 'भियः क्रुक्लुकनौ' इत्यनेन । (७) अभिजातः—कुलीन । अभि√जन्+क्त । (८) सेवाधर्मः—सेवा रूपी धर्म । √सेव्+अ 'गुरोश्च हलः' इत्यनेन, टाप्=सेवा । ध्रियते अनेन समाजः संसारो वा इति धर्मः √धृ+मन् । सेवारूपः धर्मः (मध्य० स०) । (९) योगिनाम् अपि अगम्यः—योगियों के लिए कठिन अर्थात् योगी भी सेवाधर्म का निर्वाह नहीं कर सकते, साधारण पुरुषों की तो बात ही क्या है ।

इस श्लोक में अतिशयोक्ति अलंकार है और मन्दाक्रान्ता छन्द है । छन्द का लक्षण—'मन्दाक्रान्ताऽम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्' ।

नीच की दृष्टि पड़ने पर कैसे सुख मिले—

**उद्भासिताखिलखलस्य विशृङ्खलस्य**
**प्रोद्गाढविस्मृतनिजाधमकर्मवृत्तेः ।**
**दैवादवाप्तविभवस्य गुणद्विषोऽस्य**
**नीचस्य गोचरगतैः सुखमास्यते कैः ॥४९॥**

अन्वयः—उद्भासिताखिलखलस्य विशृङ्खलस्य प्रोद्गाढविस्मृतनिजाधमकर्मवृत्तेः दैवात् अवाप्तविभवस्य गुणद्विषः अस्य नीचस्य (जनस्य) गोचरगतैः कैः सुखम् आस्यते ।

संस्कृत-व्याख्या—उद्भासिताखिलखलस्य—उद्भासिताः प्रकाशिताः अखिलाः सकलाः खलाः दुष्टाः येन तादृशस्य, विशृङ्खलस्य—उच्छृङ्खलस्य, प्रोद्गाढविस्मृतनिजाधमकर्मवृत्तेः—प्रोद्गाढम् अतितराम् यथा तथा विस्मृता विस्मरणं नीता निजा स्वकीया अधमकर्मवृत्तिः नीचकर्मव्यापारः येन तस्य, दैवात्—संयोगात्, अवाप्तविभवस्य—प्राप्तलक्ष्मीकस्य, गुणद्विषः—गुणद्रोहिणः, अस्य—पूर्वोक्तस्य, नीचस्य—अधमपुरुषस्य, गोचरगतैः—विषयवासिभिः, कैः—जनैः, सुखं—सुखपूर्वकम्, आस्यते—स्थीयते ? कैरपि नेत्यर्थः ।

अनुवाद—जो नीच सर्व-गुण-द्वेषी है और जो संयोगवश विभव पाये हुए है, जो अपनी पहले की अधम कर्मवृत्ति को एकदम भूल बैठा है, जो उच्छृङ्खल है और जिसने खल-मण्डली का गौरव बढ़ा दिया है (प्रोत्साहन द्वारा अथवा

अपनी उन्नति द्वारा) उस नीच की पहुँच के भीतर—उसके वश में रह कर—कौन सुख से रह सकता है।

Who can live happily, when fallen within the range of a meanminded, villain; who hates all merits, who has obtained affluence by chance, who has quite totally forgotten his own former mode of living by nefarious deeds, who is all unbridled and who has aggrandised the entire class of knaves.

संस्कृत-भावार्थ—अदृष्टवशात् प्राप्तलक्ष्मीकः विस्मृतस्वप्राक्तननीचकर्मजीविकानिर्वाहः गुणद्रोही दुर्जनशिरोमणिः नीचपुरुषः सर्वेषां क्लेशकरो भवति। अतः तस्य दूरे एव स्थातव्यं सर्वैः।

टिप्पणी—(१) उद्भासिताखिलखलस्य—समस्त दुष्टों को प्रकाशित करने वाले अर्थात् अधिकार देकर सारे दुष्टों को पुरस्कृत करने वाले। अखिलाः खलाः (कर्म० स०), उद्भासिताः अखिलखलाः येन सः (ब० स०), तस्य। (२) विशृङ्खलस्य—शृंखला-रहित अर्थात् मनमाना काम करने वाले, स्वेच्छाचारी का। विगता शृङ्खला विधिनिषेधरूपा यस्य सः (ब० स०), तस्य। (३) प्रोद्गाढविस्मृतनिजाधमकर्मवृत्तेः—अपनी (पहले की) अधम कर्मवृत्ति को एकदम भूल जाने वाले। प्र—उद्√गाह्+क्त=प्रोद्गाढ। √वृत्+क्तिन्=वृत्तिः। प्रोद्गाढं यथा तथा विस्मृता प्रोद्गाढविस्मृता (सुप्सुपा स०)। अधमानि कर्माणि अधमकर्माणि (कर्म० स०), अधमकर्मभिः वृत्तिः इति अधमकर्मवृत्तिः (तृ० त०), निजा अधमकर्मवृत्तिः (कर्म० स०), प्रोद्गाढविस्मृता निजाधमकर्मवृत्तिः यस्य सः (ब० स०), तस्य। (४) अवाप्तविभवस्य—धन प्राप्त किये हुए। अवाप्तः विभवः येन सः (ब० स०) तस्य। यहाँ 'अवाप्त' का सम्बन्ध 'दैवात्' से है। अतः सामर्थ्याभावात् समास नहीं होना चाहिए। किन्तु 'सापेक्षत्वेऽपि गमकत्वात् समासः' इस नियम से यहाँ समास हो गया। (५) गुणद्विषः—सद्गुणों से द्वेष करने वाले। गुणान् द्वेष्टि इति गुणद्विट् गुण√द्विष्+क्विप्, तस्य। (६) गोचरगतैः—(उसकी) पहुँच के भीतर अर्थात् वश में रहने वाले। गो√चर्+घ=गोचरः। गोचरं गतः (द्वि० त०), तैः। यह 'कैः=पुरुषैः' का विशेषण है। (७) सुखम्—अत्र क्रियाविशेषणे द्वितीया।

इस श्लोक में 'कोई सुख से नहीं रह सकता है,' इसका कारण पहले बता दिया गया है, इसलिए काव्यलिंग अलंकार है और वसन्ततिलका छन्द है।

खलों एवं सज्जनों की मैत्री में अन्तर—

**आरम्भगुर्वी क्षयिणी क्रमेण**
**लघ्वी पुरा वृद्धिमुपैति पश्चात् ।**
**दिनस्य पूर्वार्धपरार्धभिन्ना**
**छायेव मैत्री खलसज्जनानाम् ॥५०॥**

अन्वयः—आरम्भगुर्वी क्रमेण क्षयिणी; पुरा लघ्वी, पश्चात् वृद्धिम् उपैति। दिनस्य पूर्वार्धपरार्धभिन्ना छाया इव खलसज्जनानाम् मैत्री।

संस्कृत-व्याख्या—आरम्भगुर्वी—आरम्भे आदौ गुर्वी बृहती, क्रमेण—कालक्रमेण, क्षयिणी—क्षयशीला, पुरा—प्रारम्भे, लघ्वी—सूक्ष्मा, पश्चात्—अनन्तरं, वृद्धिम् उपैति—वर्धते, दिनस्य—दिवसस्य, पूर्वार्धपरार्धभिन्ना—पूर्वार्धपरार्धाभ्यां पूर्वाह्णापराह्णाभ्यां भिन्ना पृथग्विधा, छाया इव—अनातप इव, खलसज्जनानां—दुर्जनसज्जनानां, मैत्री—मित्रता (भवति)।

अनुवाद—आरम्भ में बड़ी फिर धीरे-धीरे छोटी होने वाली, पहले छोटी पर पीछे धीरे-धीरे बढ़ने वाली—पूर्वाह्न और अपराह्न काल की छाया की जैसी—खल और सज्जनों की मित्रता होती है।

The friendship of the wicked and the good people differs like the shadow in the first and the second half of the day (respectively) (wickedman's friendship). is great in the beginning but gradually it wanes (goodman's friendship) is at first small, but it increases afterwards.

संस्कृत-भावार्थ—यथा दिनस्य पूर्वार्धे छाया बृहती अस्ति, अनन्तरं क्रमेण क्षयिणी भवति तथैव दुर्जनस्य मैत्री आरम्भे महती स्यात् पश्चात् च क्रमेण स्वल्पात् स्वल्पतरा भवति। किन्तु सज्जनमैत्री एतद्विपरीता। यथा अपराह्णकाले छाया प्राक् लघ्वी सती क्रमेण वर्धते तथैव सज्जनानां मैत्री आरम्भे लघ्वी भवति परन्तु कालक्रमेण अनुदिनं वर्धते।

टिप्पणी—(१) आरम्भगुर्वी—आरम्भ में बड़ी। गुरु+ङीप् 'वोतो गुणवचनात्' इत्यनेन=गुर्वी अथवा गुरुः। आरम्भे गुर्वी (स० त०)। (२) क्षयिणी—क्षीण होने वाली। क्षेतुं शीलं यस्याः सा क्षयिणी√क्षि+णिनि+

ङीप्। (३) पूर्वार्धपरार्धभिन्ना—(दिन के) पहले और पिछले भाग में भिन्न-भिन्न रूप से रहने वाली। पूर्वः अर्धः पूर्वार्धः, परः अर्धः परार्धः (कर्म० स०)। 'अर्धं नपुंसकम्'—सूत्र का अर्थ है—समांशवाची अर्ध शब्द अर्थात् ठीक-ठीक आधा अर्थ जहाँ विवक्षित हो वहाँ अर्ध शब्द नित्य नपुंसकलिंग में प्रयुक्त होता है तथा वह षष्ठ्यन्त अवयवी के साथ समस्त होता है। यथा—'अर्धं गृहस्य इति अर्धगृहम्।' यहाँ अर्ध शब्द समांशवाची नहीं है अर्थात् पूर्वार्ध और परार्ध का अर्थ ठीक प्रथम आधा तथा ठीक दूसरा आधा नहीं है। इसलिए 'अर्धं नपुंसकम्' से समास नहीं हुआ। पूर्वार्धश्च परार्धश्च इति पूर्वार्धपरार्धौ (द्व० स०), ताभ्यां भिन्ना इति (तृ० त०)। (४) खलसज्जनानाम्—दुर्जनों और सज्जनों की मित्रता। खलाश्च सज्जनाश्च इति खलसज्जनाः (द्व० स०), तेषाम्। स्पष्टार्थ यह है कि पूर्वाह्न में किसी वस्तु की छाया पहले बड़ी होती है, किन्तु वह क्रमशः क्षीण होती जाती है। इसी तरह दुष्ट पुरुष की मित्रता पहले बड़ी होती है, किन्तु वह क्रमशः घटती है। इसके विपरीत अपराह्न में किसी वस्तु की छाया पहले छोटी होती है, किन्तु वह क्रमशः बड़ी होती जाती है। इसी तरह सत्पुरुष की मित्रता पहले तो छोटी होती है, पर क्रमशः वह बढ़ती ही जाती है।

इस श्लोक में यथासंख्य तथा उपमा अलंकार हैं और उपजाति छन्द है।

अकारण वैरी—

**मृगमीनसज्जनानां तृणजलसंतोषविहितवृत्तीनाम्।**
**लुब्धकधीवरपिशुना निष्कारणमेव वैरिणो जगति ॥५१॥**

अन्वयः—तृणजलसंतोषविहितवृत्तीनाम् मृगमीनसज्जनानाम् लुब्धकधीवर-पिशुनाः जगति निष्कारणम् एव वैरिणः।

संस्कृत-व्याख्या—तृणजलसन्तोषविहितवृत्तीनां—तृणं घासः जलं पानीयं सन्तोषः मनस्तुष्टिः तैः विहिता कल्पिता वृत्तिः येषां तेषाम्, मृगमीनसज्जनानां—हरिणमत्स्यसाधूनां, लुब्धकधीवरपिशुनाः—लुब्धकः व्याधः धीवरः जालिकः पिशुनः सूचकः, जगति—संसारे, निष्कारणं—विना कारणम्, एव, वैरिणः—शत्रवः (सन्ति)।

**अनुवाद**—मृग, मीन और सज्जन, घास, जल और सन्तोष से अपनी जीविका प्राप्त करते हैं; पर व्याध, मछुआ और चुगलखोर बिना कारण ही उनसे, क्रमशः, वैर करते हैं।

The hunter, the fisherman and the back-biter, are in this world the enemies without any cause of the deer, the fish and the good people living on grass, water and contentment respectively.

**संस्कृत-भावार्थ**—संसारे तृणेन जलेन सन्तोषेण क्रमशो वृत्तिम् उपकल्पयतो मृगान् मीनान् सज्जनान् क्रमेण व्याधाः धीवराः पिशुनाः द्विषन्ति।

**टिप्पणी**—(१) **तृणजलसन्तोषविहितवृत्तीनाम्**—घास, पानी तथा सन्तोष से जीविकोपार्जन करने वाले। सम्√तुष्+घञ् भावे=सन्तोषः। वि√धा+क्त कर्मणि=विहित। √वृत्+क्तिन् भावे=वृत्तिः। तृणं च जलं च सन्तोषश्च इति तृणजलसन्तोषाः (द्व० स०), तैः विहिता (तृ० त०), तादृशी वृत्तिः येषां ते तृणजलसन्तोषवृत्तयः (ब० स०), तेषाम् सम्बन्धे षष्ठी। (२) **मृगमीनसज्जनानाम्**—हरिण, मछली तथा सज्जन के। मृगाश्च मीनाश्च सज्जनाश्च इति मृगमीनसज्जनाः (द्व० स०), तेषाम्। (३) **लुब्धकधीवरपिशुनाः**—बहेलिया, मछुआ तथा दुर्जन। लुब्धकश्च धीवरश्च पिशुनश्च इति लुब्धकधीवरपिशुनाः (द्व० स०)। (४) **निष्कारणम्**—अकारण। निः नास्ति कारणं यस्य तत् यथा स्यात् तथा। क्रियाविशेषणे द्वितीया। (५) **वैरिणः**—शत्रु। वैरम् अस्ति एषाम् इति वैर+इनि।

इस श्लोक में यथासंख्य अलंकार है, क्योंकि 'लुब्धकधीवरपिशुनाः' क्रमशः 'मृगमीनसज्जनानाम्' के शत्रु हैं। इसमें आर्या छन्द है।

## अथ सुजनपद्धतिः

वाञ्छा सज्जनसंगतौ परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम्।
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खलै-
रेते येषु वसन्ति निर्मलगुणास्तेभ्यो महद्भ्यो नमः ॥५२॥

अन्वयः—सज्जनसंगतौ वाञ्छा, परगुणे प्रीतिः, गुरौ नम्रता, विद्यायां व्यसनम्; स्वयोषिति रतिः, लोकापवादात् भयम्, शूलिनि भक्तिः, आत्मदमने शक्तिः, खलैः (सह) संसर्गमुक्तिः, एते निर्मलगुणाः येषु वसन्ति तेभ्यः महद्भ्यः नमः।

संस्कृत-व्याख्या—सज्जनसंगतौ—साधुसमागमे, वाञ्छा—अभिलाषः, परगुणे—परेषाम् अन्येषां गुणे दयादाक्षिण्यादौ, प्रीतिः—सन्तोषः, गुरौ—गुरुजने, नम्रता—विनयशीलता, विद्यायां—वेदान्तादिशास्त्रज्ञाने, व्यसनम्—आसक्तिः, स्वयोषिति—स्वपत्न्यां, रतिः—प्रेम, लोकापवादात्—लोकनिन्दायाः, भयं—भीतिः, शूलिनि—शङ्करे, भक्तिः—श्रद्धानुरागः, आत्मदमने—आत्मसंयमे, शक्तिः—सामर्थ्यम्, खलैः—दुष्टैः (सह), संसर्गमुक्तिः—सङ्गत्यागः, एते—इमे, निर्मलगुणाः—निष्कलङ्काः गुणाः, येषु—महापुरुषेषु, वसन्ति—विद्यन्ते, तेभ्यः, महद्भ्यः—महात्मभ्यः, नमः—प्रणामाः सन्तु।

अनुवाद—जिनको सज्जनों की संगति की चाह है, और जो दूसरों के गुण से प्रेम रखते हैं, बड़े-बूढ़ों के प्रति जो नम्र बने रहते हैं, जिन्हें विद्या में व्यसन है—विद्योपार्जन में जो लगे रहते हैं, अपनी स्त्री से जिन्हें प्रेम रहता है, लोक-निन्दा से जो डरते हैं, शिव में जिनकी भक्ति रहती है और जो आत्म-दमन करते हैं, अपनी इन्द्रियों को वश में रखते हैं; जो खलों की संगति से दूर भागते हैं; ये निर्मल गुण जिन महापुरुषों में विद्यमान हैं उन महात्माओं को हम प्रणाम करते हैं।

Salutation to the great, soule, in whom dwell the following sterling virtues :—desire for the company of the good, gratification at the quality of others, humility towards superiors, love of learning or close application to learning, attachment to one's own wife, fear from public scandal, devotion to Lord Siva, power in self-control, and avoidance of the contact with wicked men.

संस्कृत-भावार्थ—ये महानुभावाः साधुसमागमं वाञ्छन्ति परगुणेषु प्रीतिं कुर्वन्ति पूज्यान् पित्रादीन् प्रति सविनयास्तिष्ठन्ति वेदान्तादिशास्त्राभ्यासे आसज्जन्ते स्वपत्न्याम् अनुरज्यन्ति लोकापवादाद् बिभ्यति शिवे भक्तिं कुर्वन्ति इन्द्रियाणि दमयन्ति खलसंसर्गाद् दूरे तिष्ठन्ति ते वन्दनीयाः। सर्वथा च तेषां चरितमनुकरणीयं सर्वैः।

टिप्पणी—(१) सज्जनसंगतौ—सज्जनों की संगति में। सत्+जन=सज्जन। सज्जनानां संगतिः (ष० त०), तस्याम्। विषयाधिकरणे सप्तमी। यहां सभी

सप्तम्यन्त पद में विषयाधिकरणे सप्तमी है । (२) व्यसनम्—आसक्ति । वि√ अस्+ल्युट् । (३) स्वयोषिति—अपनी स्त्री में । स्वस्य योषित् (ष० त०), तस्याम् । 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः । (४) लोकापवादात्—लोक-निन्दा से । लोकानाम् अपवादः (ष० त०), तस्मात् 'भीत्रार्थानां भयहेतुः' इति सूत्रेण पञ्चमी । (५) खलैः—दुष्टों के साथ । अत्र 'सहयुक्तेऽप्रधाने' इत्यनेन तृतीया । खलैः सह इत्यर्थः । 'विनापि सहार्थ-शब्दयोगे तृतीया', यथा—वृद्धो यूना आगच्छति । (६) संसर्गमुक्तिः—संगति से छुटकारा । सम्√सृज्+घञ् भावे=संसर्गः । √मुच्+क्तिन् भावे=मुक्तिः । संसर्गस्य मुक्तिः (ष० त०) । कहा भी है—'दुर्जनं दूरतस्त्यजेत्' । 'दुर्जनः परिहर्तव्यः' । (७) निर्मलगुणाः—निर्दोष या उत्तम गुण । निः नास्ति मलं येषु ते निर्मलाः (प्रा० ब० स०) । निर्मलाः गुणाः (कर्म० स०) । (८) महद्भ्यः—महापुरुषों को । अत्र 'नमः स्वस्तिस्वाहास्वधालंवषड्योगाच्च' इति सूत्रेण चतुर्थी । तुलना कीजिए—'चिन्ता यशसि न वपुषि व्यसनं शास्त्रे न युवतिकामास्त्रे । भक्तिर्भवे न विभवे प्रायः परिदृश्यते महताम् ॥'

इस श्लोक में शार्दूलविक्रीडित छन्द है ।

महापुरुषों का लक्षण—

विपदि धैर्यमथाभ्युदये क्षमा<br>
सदसि वाक्पटुता युधि विक्रमः ।<br>
यशसि चाभिरुचिर्व्यसनं श्रुतौ<br>
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥५३॥

अन्वयः—विपदि धैर्यम्, अथ अभ्युदये क्षमा, सदसि वाक्पटुता, युधि विक्रमः, यशसि अभिरुचिः, श्रुतौ व्यसनं च, इदं हि महात्मनाम् प्रकृतिसिद्धम् ।

संस्कृत-भावार्थ—विपदि—विपत्तौ, धैर्य—स्थिरचित्तता, अथ—अनन्तरम्, अभ्युदये—सम्पदि, क्षमा—सहिष्णुता, सदसि—सभायां, वाक्पटुता—वाक्चातुर्यं, युधि—युद्धे, विक्रमः—पराक्रमः, यशसि—कीर्तौ, अभिरतिः—संग्रहाभिलाषः, च—तथा, श्रुतौ—वेदादिशास्त्राभ्यासे, व्यसनम्—आसक्तिः, इदं—सर्वं, हि, महात्मनाम्—महानुभावानां, प्रकृतिसिद्धं—स्वभावसिद्धम् ।

अनुवाद—विपत्ति में धैर्य रखना, उन्नति में लोगों पर क्षमा दर्शाना, सभा में चतुराई से बोलना, लड़ाई में पराक्रम दिखाना, यश में रुचि रखना—यश पाने की चाह रखना, वेदशास्त्र में तल्लीन रहना—ये सब गुण महात्माओं में स्वभाव ही से सिद्ध होते हैं अर्थात् अपने आप आ जाते हैं।

Fortitude in adversity, forgiveness during prosperity, eloquence in an assembly, valour in battle, great liking for fame, devoted application to Vedic study, all these are natural with the high-souled people.

संस्कृत-व्याख्या—विपदि धैर्यम् उन्नतौ क्षमा सभायां वाक्पटुता युद्धे शौर्यं यशसि अभिरुचिः तथा शास्त्रे व्यसनम्—एते गुणाः महापुरुषेषु स्वभावतस्तिष्ठन्ति।

टिप्पणी—(१) विपदि, अभ्युदये, सदसि, युधि, यशसि, श्रुतौ—इन सभी शब्दों में अधिकरणे सप्तमी है। अभि उद्√इ + अच्=अभ्युदयः, तस्मिन्। (२) क्षमा—√क्षम् अङ्+टाप्। (३) इदम्—यह सर्वनाम अपने से पूर्व आये हुए सभी प्रथमान्त शब्दों के लिए आया है। एकशेष समास में 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' सूत्र से एकवचन हो जाने के कारण ऐसा हुआ है। (४) महात्मनाम्—बड़े लोगों में। महान् आत्मा येषां ते महात्मानः (ब० स०), तेषाम्। (५) प्रकृतिसिद्धम्—स्वभाव से ही विद्यमान। प्रकृत्या सिद्धम् इति (तृ० त०)।

इस श्लोक में द्रुतविलम्बित छन्द है। छन्द का लक्षण—द्रुतविलम्बितमाह नभौ भरौ।

महापुरुषों के स्वाभाविक अलंकरण—

> करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता
> मुखे सत्या वाणी विजयि भुजयोर्वीर्यमतुलम्।
> हृदि स्वच्छा वृत्तिः श्रुतमधिगतं च श्रवणयो-
> र्विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥५४॥

अन्वयः—करे श्लाघ्यः त्यागः, शिरसि गुरुपादप्रणयिता, मुखे सत्या वाणी, भुजयोः विजयि अतुलं वीर्यं, हृदि स्वच्छा वृत्तिः श्रवणयोः च अधिगतं श्रुतम्, इदम् ऐश्वर्येण विना अपि प्रकृतिमहताम् मण्डनम् अस्ति।

संस्कृत-व्याख्या—करे—हस्ते, त्यागः—दानम्, शिरसि—मस्तके, गुरुपादप्रणयिता—गुरूणां पूज्यानां मातापित्रादीनां—पादयोः चरणयोः प्रणयिता नम्रता, मुखे—आनने, सत्या—यथार्था, वाणी—वाक्, भुजयोः—बाह्वोः, विजयि—विजयशीलम्, अतुलम्—अनुपमं, वीर्यं—बलम्, हृदि—हृदये, स्वच्छा—निर्मला, वृत्तिः—व्यापारः, श्रवणयोः—कर्णयोः, अधिगतं—प्राप्तम् अधीतमिति यावत्, श्रुतं—शास्त्रम्, इदं—पूर्वोक्तं सर्वम्, ऐश्वर्येण—धनरत्न-सम्पत्त्या, विनापि—ऋतेऽपि, प्रकृतिमहताम्—प्रकृत्या स्वभावेन महताम् महात्मनाम्, मण्डनम्—भूषणम् (अस्ति)।

अनुवाद—शुभ दान हाथ का भूषण है, गुरुजनों के चरणों में प्रणाम करना शिर का भूषण है, सत्य वचन मुख का, अतुल वीरता भुजाओं का, निर्मल वृत्ति हृदय का और ज्ञान-प्राप्ति कानों का भूषण हैं। बिना ऐश्वर्य के ही ये सब स्वभाव से जो बड़े होते हैं उन महापुरुषों के लिये भूषण हैं।

Praiseworthy charity is the ornament for the hand; obeisance to the feet of elders for the head; truthful speech for the mouth; the peerless victorious prowess for the hands; limpid state or (clear action) for the heart, sacred lore obtained of the ears, all these are the ornaments of persons, great by nature, even though they possess no wealth.

संस्कृत-भावार्थ—महापुरुषाणां प्रकृतिसिद्धानि भूषणानि अन्यान्येव भवन्ति। यथा—तेषां हस्तस्य आभूषणं दानं भवति न तु कङ्कणम् मस्तकस्य आभूषणं गुरुजनचरणयोः नम्रता भवति न तु मणिमाणिक्यकोटीरादि, मुखस्य आभूषणं सत्या वाणी भवति न तु ताम्बूलचर्वणादि. भुजयोः आभूषणं बलम् भवति न तु केयूरादि, हृदयस्य आभूषणं निर्मला वृत्तिः भवति न तु हाररुचकादि, कर्णयोः आभूषणम् अधीतं शास्त्रं भवति न तु कुण्डले।

टिप्पणी—(१) करे—हाथ में। यहाँ सभी सप्तम्यन्त पदों में अधिकरणे सप्तमी है। (२) श्लाघ्यः—प्रशंसनीय। √श्लाघ्+ण्यत् कर्मणि। (३) त्यागः—दान। √त्यज्+घञ्। (४) गुरुपादप्रणयिता—गुरुजनों के चरणों में प्रणामशीलता। प्रणयिता—स्नेह, आदरभाव, आज्ञाकारिता। प्रणयः अस्ति अस्य इति प्रणयी प्रणय+इनि, तस्य भावः प्रणयिता प्रणयिन्+तल्+टाप्। गुरूणां

पादाः (ष० त०), तेषु प्रणयिता (स० त०)। (५) विजयि—विजयशील या विजय प्रदान करने वाला। वि√जि+णिनि कर्तरि ताच्छील्ये। (६) हृदि स्वच्छा वृत्तिः—निर्मल या निष्कलुष आचरण या व्यवहार हृदय का आभूषण है। (७) श्रुतम्—शास्त्र का ज्ञान। 'श्रुतं शास्त्रावधृतयोः' इति विश्वः। 'श्रोत्रं श्रुतेनैव न कुण्डलेन'। (८) इदम्—श्लोक संख्या ५३ की टिप्पणी देखिए। (९) ऐश्वर्येण विना—धन-सम्पत्ति के बिना। √ईश्+वरच्=ईश्वरः, ईश्वरस्य कर्म भावो वा ऐश्वर्यम् ईश्वर+ष्यञ्। (१०) प्रकृतिमहताम्—स्वभाव से ही महान् पुरुषों के लिए। प्रकृत्या महान्तः (तृ० त०), तेषाम्।

इस श्लोक में विभावना अलंकार है, क्योंकि ऐश्वर्य के न रहने पर भी भूषण हैं। 'क्रियायाः प्रतिषेधेऽपि फलव्यक्तिः विभावना'। इसमें शिखरिणी छन्द है।

कल्याण का मार्ग—

प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं
काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम्।
तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूतानुकम्पा
सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः ॥५५॥

अन्वयः—प्राणाघातात् निवृत्तिः, परधनहरणे संयमः, सत्यवाक्यम्, काले शक्त्या प्रदानम् परेषाम् युवतिजनकथामूकभावः, तृष्णास्रोतोविभङ्गः, गुरुषु विनयः, सर्वभूतानुकम्पा, एषः सर्वशास्त्रेषु सामान्यः अनुपहतविधिः, श्रेयसाम् पन्थाः।

संस्कृत-व्याख्या—प्राणाघातात्—जीवहिंसायाः, निवृत्तिः—निवर्तनम्, परधनहरणे—परवित्तापहरणे, संयमः—मनोरोधः, सत्यवाक्यं—यथार्थभाषणं, काले—समये, शक्त्या—स्वसामर्थ्यानुसारं, प्रदानं—दानम्, परेषाम्—अन्येषाम्, युवतिजनकथामूकभावः—युवतिजनानां तरुणीवृन्दानां कथायां चर्चायां मूकभावः मौनम्, तृष्णास्रोतोविभङ्गः—तृष्णा धनलिप्सा तस्याः स्रोतः प्रवाहः तस्य विभंगः अवरोधनम्, गुरुषु—गुरुजनेषु, विनयः—नम्रता, सर्वभूतानुकम्पा—सर्वेषु सकलेषु भूतेषु प्राणिषु अनुकम्पा दया, एषः—अयं, सर्वशास्त्रेषु—समस्तागमेषु, सामान्यः—साधारणः, अनुपहतविधिः—अलुप्तनियमः, श्रेयसां—कल्याणानाम्, पन्थाः—मार्गः।

अनुवाद—जीव-हिंसा से अलग रहना, पराये की संपत्ति को ले लेने से परहेज करना, सच्ची बात बोलना, समय-समय पर यथाशक्ति दान देना, औरों की स्त्री की चर्चा होते समय चुप रहना, तृष्णास्रोत को रोकना, गुरुजनों के प्रति विनय दिखाना, सब जीवों पर दया करना—यह सब शास्त्रों में अप्रतिषिद्ध विधि वाला (अर्थात् सर्वसम्मत) सकल-जन-साधारण के कल्याण का मार्ग है।

Refraining from killing life, restraint over the stealing of others' wealth, true words, charity at right time according to one's might, maintaining silence during the time of talks of others' wives, check over the current of desire, modesty to elders, kindness to all creatures.—all this is the path to blessings (of all kinds) common to all the scriptures—a path that never fails in its operation (violates no other rules).

संस्कृत-भावार्थ—जीवहिंसानिवृत्तिः, चौर्यराहित्यं, सत्यवादित्वं, दानशीलता, परस्त्रीजनकथायामप्रवृत्तिः, लोभशून्यता, नम्रता, सर्वानुग्रहबुद्धिः—इत्येतानि सर्वाणि पुरुषं कल्याणपथं नयन्ति।

टिप्पणी—(१) प्राणाघातात्—प्राण लेने या जीवहिंसा करने से। प्राणानाम् आघातः (ष० त०), तस्मात्। 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इति वार्तिकेन पञ्चमी। प्राण शब्द का प्रयोग नित्य पुंलिंग—बहुवचन में होता है। आ√हन्+घञ् भावे=आघातः। कहा भी है—'मा हिंस्यात् सर्वभूतानि'। 'अहिंसा परमो धर्मः, अधर्मः प्राणिनां वधः'। (२) निवृत्तिः—विरत होना। नि√वृत्+क्तिन् भावे। (३) परधनहरणे—दूसरों के धन को हरने में। परेषां धनम् (ष० त०), तस्य हरणम् (ष० त०), तस्मिन्। अधिकरणे सप्तमी। (४) संयमः—अपने को रोकना, परहेज करना। सम्√यम्+अप्। (५) शक्त्या—शक्ति भर। √शक्+क्तिन्=शक्तिः, तया। (६) युवतिजनकथामूकभावः—युवतियों की चर्चा होते समय चुप रहना। 'अनार्यं परदारव्यवहारं श्रोतुम्' (शाकुन्तल ५)। युवतय एव जनाः युवतिजनाः (मयूरव्यंसकादित्वात् रूपक-रूपन०), तेषां कथाः (ष० त०), तासु मूकभावः (स० तत्पु०)। यहाँ 'युवतिजन' का सम्बन्ध 'परेषाम्' से है, इसलिए सामर्थ्याभावात् समास नहीं होना चाहिए, किन्तु 'सापेक्षत्वेऽपि गमकत्वात् समासः' इस नियम से समास हो गया। (७) तृष्णास्रोतोविभङ्गः—धन की सहज इच्छा या लोभ की धारा को रोकना।

तृष्णायाः स्रोतः तस्य विभङ्गः (ष० त०)। (८) गुरुषु—गुरुजनों के प्रति। अत्र विषयाधिकरणे सप्तमी। (९) एषः—यहां 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम्' सूत्र के अनुसार 'इदम्' होना चाहिए, किन्तु 'विधेयप्राधान्यात् लिंगता' के अनुसार 'एषः' रखा गया है, क्योंकि इसका विधेय 'पन्थाः' पुंलिंग—एकवचन है। (१०) सामान्यः—सब के लिए समान। समान एव सामान्यः समान+ष्यञ् स्वार्थे। यह 'पन्थाः' का विशेषण है। (११) अनुपहतविधिः—अप्रतिषिद्ध या अलुप्त विधान वाला। न उपहतः अनुपहतः (न० त०), अनुपहतः विधिः यस्य सः (ब० स०)।

इस श्लोक में स्रग्धरा छन्द है। छन्द का लक्षण—'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्'।

सज्जनों की विलक्षणता—

**संपत्सु महतां चित्तं भवेदुत्पलकोमलम्।**
**आपत्सु च महाशैलशिलासंघातकर्कशम्॥५६॥**

अन्वयः—संपत्सु महताम् चित्तम् उत्पलकोमलम् भवेत्। आपत्सु च महाशैलशिलासंघातकर्कशम् भवेत्।

संस्कृत-व्याख्या—सम्पत्सु—विभवेषु, महतां—महात्मनां, चित्तं—चेतः, उत्पलकोमलम्—उत्पलं कमलम् इव कोमलं मृदु, भवेत्—जायते। आपत्सु—विपत्सु, च, महाशैलशिलासंघातकर्कशं—महाशैलः महापर्वतः तस्य शिलासंघातः पाषाणकूटः तद्वत् कर्कशं कठोरम् (भवेत्)।

अनुवाद—संपत्ति में बड़ों का चित्त कमल के जैसा कोमल रहता है, पर जब विपत्ति आ धमकती है तब वही (उत्पलकोमल) चित्त महाशैल की चट्टानों के समूह समान कठोर हो जाता है।

During prosperity, the mind of the magnanimous becomes soft like a lotus, while in adversity, it becomes hard like a solid mass of rocks of a great mountain.

संस्कृत-भावार्थ—महापुरुषाणां चित्तं सम्पत्तिकाले कमलपुष्पवत् कोमलं भवति, तदेव विपत्तिकाले प्रस्तर इव कठोरं भवति अर्थात् ते प्रस्तर इव कठिने मनसि धैर्यं वहन्तः सकलमापतितं दुःखं सहन्ते।

टिप्पणी—(१) सम्पत्सु—सम्पत्ति में। सम्√पद्+क्विप् भावे=सम्पदः, तासु। अधिकरणे सप्तमी। (२) उत्पलकोमलम्—कमल के जैसा कोमल। उत्पलम् इव कोमलम् (उपमित स०)। (३) महाशैलशिलासंघातकर्कशम्—महापर्वत की चट्टान के समान कड़ा। शिलानां निचयः इति शैलः शिला+अण्। महान् शैलः (कर्म० स०)। महाशैलस्य शिलासंघातः (प० त०), महाशैलशिलासंघात इव कर्कशम् (उपमित स०)। सम्√हन्+घञ्=संघात। शिलानां संघातः (ष० त०)।

इस श्लोक में उपमा-अलंकार है और अनुष्टुप् छन्द है।

सज्जनता की कठिनता—

**प्रदानं प्रच्छन्नं गृहमुपगते संभ्रमविधिः,**
**प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः।**
**अनुत्सेको लक्ष्म्यां निरभिभवसाराः परकथाः,**
**सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥५७॥**

अन्वयः—प्रच्छन्नम् प्रदानम्, गृहम् उपगते (सति) संभ्रमविधिः, प्रियम् कृत्वा मौनम्, सदसि उपकृतेः अपि कथनम्, लक्ष्म्याम् अनुत्सेकः, निरभिभवसाराः परकथाः (इति) इदम् विषमम् असिधाराव्रतम् सताम् केन उद्दिष्टम्?

संस्कृत-व्याख्या—प्रच्छन्नं—गुप्तं, प्रदानं—दानं, गृहं—गेहम्, उपगते—आगते (सति), संभ्रमविधिः—संभ्रमेण त्वरया विधिः सत्कारः, प्रियम्—अभीष्टं, कृत्वा—सम्पाद्य, मौनं—तूष्णीम्भावः, सदसि—सभायाम्, उपकृतेः—परकृतोपकारस्य, अपि, कथनं—प्रख्यापनं, लक्ष्म्यां—सम्पत्तौ, अनुत्सेकः—गर्वराहित्यम्, निरभिभवसाराः—अनिन्दापराः, परकथाः—अन्यलोकप्रसंगाः, इति, इदम्—एतत्, विषमं—दुष्करम्, असिधाराव्रतं—खड्गधारेव तीक्ष्णतरो नियमः, सतां—सत्पुरुषाणां, केन उद्दिष्टम्—न केनापीत्यर्थः।

अनुवाद—गुप्त दान करना, घर आये जनों का सत्कार करना, लोगों की भलाई करके चुप रहना—किसी से न कहना, किसी के उपकार करने पर सभा-समाज में उसको खूब करना, धन पाकर गर्व नहीं करना, दूसरों के बारे में बोलते समय किसी तरह की अपमान नहीं दिखाना—किसने सज्जनों को ऐसा

विषम् असिधाराव्रत सिखाया ?—किसने सज्जनों को तलवार की धार पर चलने के समान यह कठिन व्रत सिखाया ?

By whom was taught to the good, this course of conduct, difficult like the walking on the sharp edge of a sword. ?—Charity well-concealed, quick reception to one come to their house, silence after doing good, proclaiming publicly in assembly the benefit done (to them by others), non-arrogance in prosperity, conversations about others, free even in essence from any insult.

**संस्कृत-भावार्थ**—सज्जनाः गुप्तदानं कुर्वन्ति, गृहम् आगते सति अर्थिनि झटिति तं सत्कुर्वन्ति, स्वकृतम् उपकारं न कुत्रापि ब्रुवन्ति, परकृतमुपकारं तु सभायामपि प्रख्यापयन्ति, सम्पत्सु गर्वं न विदधते, परनिन्दां न कुर्वते—एते गुणाः सज्जनानां स्वभावसिद्धाः न खलु परोपदेशमूलाः भवन्ति ।

**टिप्पणी**—(१) **प्रच्छन्नम्**—गुप्त । प्र√छद्+क्त । (२) **उपगते**—आये हुए । यह लुप्त 'अर्थिनि' का विशेषण है । यहाँ भाव में सप्तमी हुई । (३) **सम्भ्रमविधिः**—आदर-सत्कार की क्रिया । सम्भ्रमस्य विधिः (ष० त०) । अथवा तुरन्त अभ्युत्थान, अभिवादन आदि रूप विधि को सम्पन्न करना । सम्भ्रमेण त्वरया विधिः (सुप्सुपा स०) । 'सम्भ्रमः साध्वसेऽपि स्यात्संवेगादरयोरपि' इति मेदिनी । (४) **प्रियं कृत्वा मौनम्**—किसी का प्रिय कार्य करके चुप रहना । 'न दत्त्वा परिकीर्तयेत्' इति मनुः । (५) **उपकृतेः कथनम्**—(दूसरे के किये हुए) उपकार को कहना । भाव यह है कि सज्जन पुरुष स्वयं जो लोगों का उपकार करते हैं वह किसी के समक्ष प्रकट नहीं करते, किन्तु उन पर जो उपकार किया जाता है उसका गान वे सभी के समक्ष करते हैं । दुष्टों के कार्य ठीक इसके विपरीत होते हैं । उप√कृ+क्तिन् भावे=उपकृति । (६) **अनुत्सेकः**—गर्व न करना । न उत्सेकः अनुत्सेकः (न० त०) । (७) **निरभिभवसाराः परकथाः**—दूसरों के विषय में कहना जिसका सारांश उनके प्रति अपमान से रहित हो । अभि√भू+अप्=अभिभवः । √सृ+घञ् 'सृ स्थिरे' इत्यनेन=सारः । निर्गतः अभिभवः तिरस्कारः यस्मात् स निरभिभवः (प्रा० ब० स०), निरभिभवः सारः यासाम् ताः (ब० स०) । (८) **विषमम्**—कठिन । विगतं विरुद्धं वा समं विषमम् (प्रा० स०) । (९) **असिधाराव्रतम्**—तलवार की धार पर चलने

के समान व्रत। रघुवंश के तेरहवें सर्ग के ६७ वें श्लोक में मल्लिनाथ ने इस शब्द की व्याख्या तीन प्रकार से की है—(१) 'युवावस्थया सार्धं यन्मुग्धभर्तृवदाचरेत्। अन्तर्निवृत्तसङ्गः स्यादसिधाराव्रतं हि तत्॥' इति यादवः। अर्थात् युवा दम्पती एक साथ रहते हुए भी संगम न करे उसे असिधाराव्रत कहते हैं। (२) असिधाराशयनमिव दुष्करं व्रतम्—तीक्ष्ण तलवार की नोक पर लेटने के समान कठिन व्रत। (३) शयने मध्ये खड्गं निधाय स्त्रीपुंसौ यत्र ब्रह्मचर्येण स्वपितः तत्—जहाँ स्त्री और पुरुष अपने बीच में एक तीक्ष्ण तलवार को रखकर बिना एक दूसरे का स्पर्श किये हुए ही शयन करते हैं। इससे सत्पुरुषों द्वारा आचरित मार्ग की दुर्गमता बतायी गई है। (१०) सताम्—यहाँ विवक्षा से षष्ठी हुई है, अन्यथा 'सद्भ्यः' होना चाहिए था। (११) उद्दिष्टम्—उपदेश दिया या सिखाया। उद्√दिश्+क्त कर्मणि।

इस श्लोक में समुच्चय अलंकार और शिखरिणी छन्द है—

**प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरं**
**त्वसन्तो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः।**
**विपद्युच्चैर्धैर्यं पदमनुविधेयं च महतां**
**सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम्॥५८॥**

अन्वयः—प्रिया न्याय्या वृत्तिः, असुभङ्गे अपि मलिनम् असुकरम्, तु असन्तः न अभ्यर्थ्याः, कृशधनः सुहृद् अपि न याच्यः विपदि उच्चैर्धैर्यम्, महतां च पदम् अनुविधेयम्—इदं विषमम् असिधाराव्रतं सतां केन उद्दिष्टम् ?

संस्कृत-व्याख्या—प्रिया—इष्टा, न्याय्या—न्याययुक्ता, वृत्तिः—वर्तनम्, असुभङ्गे अपि—प्राणव्यये अपि, मलिनं—दुष्कृतम्, असुकरम्—अकर्तव्यम्, तु—पुनः, असन्तः—दुर्जनाः, न अभ्यर्थ्याः—न याच्याः, कृशधनः—क्षीणवित्तः, सुहृद् अपि—मित्रम् अपि, न याच्यः—न अभ्यर्थनीयः, विपदि—संकटे, उच्चैर्धैर्यम्—उच्चधीरता (धारणीया न तु विह्वलत्वम्), महतां च—महानुभावानां च, पदम्—मार्गः, अनुविधेयम्—अनुवर्तनीयम्, इदम्—एतत्, विषमं—कठिनम्, असिधाराव्रतम्—खड्गधारेव तीक्ष्णतरो नियमः, सतां—सज्जनानां, केन—पुरुषेण, उद्दिष्टम्—उपदिष्टम् न केनापीत्यर्थः।

अनुवाद—सदा न्यायसंगत और मधुर वर्ताव करना, प्राणसंकट आ जाने पर भी पाप-कर्म नहीं करना, दुर्जन से कुछ नहीं माँगना, धनहीन मित्र से भी कुछ नहीं याचना करना, विपत्ति में खूब धीरज रखना, बड़ों की चरण-सरणी का अनुसरण करना—यह कठिन असिधाराव्रत सज्जनों को किसने सिखाया ?

Who has taught good men, the difficult vow, difficult like walking on the sharp edge of a sword,—a course of conduct amiable and just, not doing sinful acts even when life is in danger, never to implore bad people, not to beg of a friend of slender means, lofty fortitude in adversity, and following in the footsteps of the great.

संस्कृत-भावार्थ—सज्जनानां न्याययुक्तो व्यवहारः सर्वेषां प्रियो भवति, प्राणसंकटेऽपि ते दुष्कर्म न कुर्वन्ति, दुर्जनान् तथा अल्पवित्तान् सुहृदः अपि न किमपि याचन्ते, विपदि उच्चधैर्यं धारयन्ति, महतामेव पदसरणिमनुवर्तन्ते। इत्थं ते विषमम् असिधाराव्रतं पालयन्ति।

टिप्पणी—(१) प्रिया—मधुर। √प्री+क 'इगुपधज्ञाप्रीकिरः कः' इत्यनेन, ततः टाप्। (२) न्याय्य—न्यायसंगत। नि√अय्+घञ्=न्यायः, न्यायात् अनपेता इति न्याय+यत् 'धर्मपथ्यर्थन्यायादनपेते इत्यनेन, ततः टाप्। (३) असुकरम्—कठिन या अकर्तव्य। सु√कृ+खल् 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इत्यनेन=सुकरम्। न सुकरम् असुकरम् (न० त०)। (४) तु—यह निरर्थक अव्यय शब्द है, केवल पादपूरणार्थ इसका प्रयोग किया जाता है। 'निरर्थकं तुहीत्यादि पूरणैकप्रयोजनम्'। हाँ, पाद के आदि में इसका प्रयोग नहीं होना चाहिए —'न पादादौ खल्वादयः' इति वामनः। यहाँ पाद के आदि में प्रयुक्त है, जो 'निरंकुशाः कवयः' के अनुसार क्षम्य है। (५) अभ्यर्थ्याः—याचना करने योग्य। अभि√अर्थ+णिच् (स्वार्थे)+यत्। (६) कृशधनः—अल्प धन वाला। √कृश्+क्त कर्तरि=कृशम् 'अनुपसर्गात् फुल्लक्षीबकृशोल्लाघाः' इत्यनेन निपातनात् सिद्धम्। कृशं धनं यस्य स कृशधनः (ब० स०)। (७) सुहृद्—मित्र। शोभनं हृदयं यस्य स सुहृद् (ब० स०), 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इत्यनेन हृदयस्य हृदादेशः। (८) उच्चैर्धैर्यम्—ऊँचा या असाधारण धैर्य। उच्चैः धैर्यम् (सुप्सुपा स०)। (९) महतां पदमनुविधेयम्—बड़े लोगों के चरण-चिह्नों का अनुसरण

करना चाहिए। (१०) विषमम्, असिधाराव्रतम्, सताम्, उद्दिष्टम्—इन शब्दों की टिप्पणी श्लोकसंख्या ५७ में देखिए।

इस श्लोक में भी समुच्चय अलंकार और शिखरिणी छन्द है।

संगति के अनुसार गुणों की उत्पत्ति—

**संतप्तायसि संस्थितस्य पयसो नामापि न श्रूयते**
**मुक्ताकारतया तदेव नलिनीपत्रस्थितं दृश्यते ।**
**स्वात्यां सागरशुक्तिमध्यपतितं तन्मौक्तिकं जायते**
**प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते ॥५९॥**

अन्वयः—संतप्तायसि संस्थितस्य पयसः नाम अपि न श्रूयते तत् एव नलिनीपत्रस्थितम् मुक्ताकारतया दृश्यते । तत् स्वात्यां सागरशुक्तिमध्यपतितम् मौक्तिकम् जायते, प्रायेण अधममध्यमोत्तमगुणः संसर्गतः जायते ।

संस्कृत-व्याख्या—संतप्तायसि—संतप्ते अग्नितप्ते अयसि लोहे, संस्थितस्य—निक्षिप्तस्य पतितस्य वा, पयसः—जलस्य, नाम अपि न श्रूयते—लेशमात्रमपि न अवशिष्यते इत्यर्थः, तत् एव—पयः, नलिनीपत्रस्थितं—कमलिनीपत्रस्थं (सत्), मुक्ताकारतया—, स्वात्यां—स्वातीनक्षत्रे, सागरशुक्तिमध्यपतितं—सागरे समुद्रे या शुक्तिः शुक्तिका तस्याः मध्ये उदरे पतितं (सत्), मौक्तिकं—मुक्ता, जायते, प्रायेण—प्रायशः, अधममध्यमोत्तमगुणः—अधमश्चासौ मध्यमश्च इति अधममध्यमः अधममध्यमश्चासौ उत्तमश्च इति अधममध्यमोत्तमः तादृशः गुणः यस्य सः, संसर्गतः—संगात्, जायते—उत्पद्यते ।

अनुवाद—गरम लोहे पर पड़ने से जल छनछना कर जल जाता है उसका नाम भी नही सुना जाता, कमल के पत्ते पर पड कर वही मोती के आकार का दिखाई पड़ता है, फिर वही समुद्र की सीपियों मे पड कर मोती बन जाता है। प्राय: अधम, मध्यम और उत्तम गुण संसर्ग से ही उत्पन्न होता है।

Not even the name of water is heard when it falls upon heated iron: the same water lying on a lotus leaf appears like a pearl; it grows into a pearl when it falls in the mouth of an oyster during the Swati constellation. Generally, the low, the medium and the high degree of excellence arises from association.

**संस्कृत-भावार्थ**—सप्तलौहपिण्डे पतितं जलं सद्यो नश्यति, तदेव जलं नलिनीपत्रे स्थापितं सत् मुक्ताकारत्वं लभते, पुनस्तदेव जलं स्वातीनक्षत्रे समुद्रस्य-शुक्तिकायाः उदरे पतितं सत् मौक्तिकं जायते । अनेन ज्ञायते यत् अधममध्यमोत्तमाः गुणाः संसर्गवशात् जायन्ते अर्थात् यादृशे संसर्गे यः पतति सः तादृशमेव गुणं धत्ते । अन्यत्राप्युक्तमस्ति—'संसर्गजा दोषगुणा भवन्ति' । अतएव महदाश्रयः कर्तव्यः ।

**टिप्पणी**—(१) **सन्तप्तायसि**—तपे लोहे पर । सन्तप्तम् अयः (कर्म० स०), तस्मिन् । अधिकरणे सप्तमी । (२) **नामापि न श्रूयते**—नाम तक नहीं सुनाई पड़ता है, बिलकुल गायब हो जाता है । (३) **नलिनीपत्रस्थितम्**—कमल के पत्ते पर स्थित । नलिन्याः पत्रम् (ष० त०), तस्मिन् स्थितम् (स० त०) । (४) **मुक्ताकारतया**—मोती की शकल में । मुक्तायाः आकार इव आकारो यस्य तत् मुक्ताकारम् (ब० स० उत्तरपदलोपश्च) 'सप्तम्युपमानपूर्वपदस्य बहुव्रीहिः वाच्यः वोत्तरपदलोपश्च' इत्यनेन । यथा—उष्ट्रमुखम् इत्यादौ । मुक्ताकारस्य भावः मुक्ताकारता मुक्ताकार+तल्+टाप्, तया । करणे तृतीया । (५) **स्वात्याम्**—स्वाती नक्षत्र में । कहते हैं कि स्वाती नक्षत्र में वर्षा का जल यदि सीपी के मुंह में पड़ता है तो वह मोती बन जाता है, यदि सांप के मुंह में पड़ता है तो विष बन जाता है और यदि बांस के छिद्र में पड़ता है तो वंशलोचन बन जाता है । (६) **सागरशुक्तिमध्यपतितम्**—समुद्र की सीपी के भीतर गिरा हुआ । सागरस्य शुक्तिः (ष० त०), तस्याः मध्यम् (ष० त०), तस्मिन् पतितम् (स० त०) । (७) **मौक्तिकम्**—मोती । मुक्ता एव मौक्तिकम् मुक्ता+ठक् स्वार्थे विनयादित्वात् । (८) **प्रायेण**—अधिकतर । 'प्रायो बाहुल्यतुल्ययोः' इति मेदिनी । (९) **अधममध्यमोत्तमगुणः**—अधमश्चासौ मध्यमश्च (विशेषणोभयपदकर्म स०) 'खञ्जकुब्जः' के समान । अधममध्यमश्चासौ उत्तमश्च इति अधममध्यमोत्तमः (पूर्ववत् कर्म० स०) । अधममध्यमोत्तमः गुणः यस्य स अधममध्यमोत्तमगुणः (ब० स०) । (१०) **संसर्गतः**—संगति से । संसर्ग+तस् 'अपादाने चाहीयरुहोः' इत्यनेन । (११) **जायते**—उत्पन्न होता है यहाँ पुनरुक्त दोष है । तीसरे चरण में भी यह पद आ चुका है । अन्तिम चरण का पाठभेद मिलता है, जो अच्छा है—'प्रायेणाधममध्यमोत्तमजुषामेवंविधा वृत्तयः'

इस श्लोक में क्रमानुसार अन्वय होने से यथासंख्य अलंकार है। इसमें शार्दूलविक्रीडित छन्द है।

बड़े पुण्यों से प्राप्त होने वाले पदार्थ—

यः प्रीणयेत्सुचरितैः पितरं स पुत्रो
यद्भर्तुरेव हितमिच्छति तत्कलत्रम् ।
तन्मित्रमापदि सुखे च समक्रियं य-
देतत्त्रयं जगति पुण्यकृतो लभन्ते ॥६०॥

अन्वय.—यः सुचरितैः पितरम् प्रीणयेत् स पुत्रः । यत् भर्तुः हितम् एव इच्छति तत् कलत्रम् । यत् आपदि सुखे च समक्रियम् तत् मित्रम् । एतत् त्रयम् जगति पुण्यकृतः लभन्ते ।

संस्कृत-व्याख्या—यः—पुत्रः, सुचरितैः—सदाचरणैः, पितरं—जनकं, प्रीणयेत्—सन्तोषयेत्, सः, पुत्रः—तनयः । यत्, भर्तुः—पत्युः, हितम्—इष्टम्, एव, इच्छति—वाञ्छति, तत् कलत्रं—भार्या । यत्, आपदि—संकटे, सुखे—संपदि, च, समक्रियं—तुल्यवृत्तिः, तत्, मित्रं—सुहृत् । एतत् त्रयं—सुपुत्रं सुकलत्रं सुमित्रं च, जगति—संसारे, पुण्यकृतः—पुण्यशालिनः (जनाः), लभन्ते—प्राप्नुवन्ति ।

अनुवाद—जो अपने सुन्दर चरित्रों से पिता को प्रसन्न करे वही पुत्र है । जो अपने पति का हितमात्र चाहती है वही स्त्री है । वही मित्र है जो अपने मित्र के सुख-दुःख में एक समान बना रहता है । पुण्यवान् लोग ही संसार में ये तीनों पदार्थ पाते हैं ।

He is the son who gratifies his father by his good actions. That is wife who desires only the good of her husband. That is the friend who acts uniformly in adversity and prosperity. These three the pious alone do get in this world.

संस्कृत-भावार्थ—संसारे पितृसन्तोषकारकः सत्पुत्रः, पतिहितपरायणा सुभार्या समदुःखसुखं सन्मित्रं पुण्येनैव प्राप्यन्ते, कुपुत्रादिप्राप्तिः पापकर्मणा फलम् ।

टिप्पणी—(१) सुचरितैः—सुन्दर चरित्रों या आचरणों से । शोभनानि चरितानि (प्रा० स०), तैः । करणे तृतीया । (२) प्रीणयेत्—सन्तुष्ट करे ।

√प्री (तर्पणे)+विधिलिङ् । (३) पुत्रः—पुन्नामनरकात् त्रायते यः स पुत्रः न तु जातमात्रः पुत्रः पुत् √त्रै+क । 'जीवतोर्वाक्यकरणात् प्रत्यब्दं भूरिभोजनात् । गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता' ।। (४) कलत्रम्—पत्नी । यह नित्य नपुंसकलिंग शब्द है । (५) समक्रियम्—एक समान काम करने वाला । समा क्रिया यस्य तत् समक्रियम् (ब० स०) । (६) त्रयम्—तीनों । त्रि+तयप् 'संख्याया अवयवे तयप्' इत्यनेन, ततः 'द्वित्रिभ्यां तयस्यायज्वा' इत्यनेन तयपः अयजादेशः=त्रयम् वा त्रितयम् । (७) पुण्यकृतः—पुण्यात्मा । पुण्यं कुर्वन्ति इति पुण्य√कृ+क्विप् 'सुकर्मपापमन्त्रपुण्येषु कृञः' इत्यनेन, 'ह्रस्वस्य पिति कृति तुक्' इत्यनेन तुक् आगमः ।

इस श्लोक में वसन्ततिलका छन्द है ।

अभिनन्दनीय सज्जन—

**नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान्गुणान्ख्यापयन्तः**
**स्वार्थान्संपादयन्तो विततपृथुतरारम्भयत्नाः परार्थे ।**
**क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान्दुर्जनान्दूषयन्तः**
**सन्तः साश्चर्यचर्या जगति बहुमताः कस्य नाभ्यर्चनीयाः ।।६१।।**

अन्वयः—नम्रत्वेन उन्नमन्तः, परगुणकथनैः स्वान् गुणान् ख्यापयन्तः, परार्थे विततपृथुतरारम्भयत्नाः स्वार्थान् संपादयन्तः, क्षान्त्या एव आक्षेपरूक्षाक्षरमुखर-मुखान् दुर्जनान् दूषयन्तः, साश्चर्यचर्याः सन्तः जगति बहुमताः कस्य न अभ्यर्चनीयाः ?

संस्कृत-व्याख्या—नम्रत्वेन—नम्रतया, उन्नमन्तः—उन्नतिं प्राप्नुवन्तः, पर-गुणकथनैः—परेषाम् अन्येषां गुणकथनैः सद्गुणप्रशंसनैः, स्वान्—निजान, गुणान्, ख्यापयन्तः—प्रकटयन्तः, परार्थे—परप्रयोजननिर्वहणे, विततपृथुतरारम्भयत्नाः—विततः विस्तृताः पृथुतराः महत्तराः च आरम्भाः कार्याणि तेषु यत्नाः उद्योगाः येषां तादृशाः, स्वार्थान्—स्वप्रयोजनानि, सम्पादयन्तः—निष्पादयन्तः, क्षान्त्या—सहनशीलतया, एव, आक्षेपरूक्षाक्षरमुखरमुखान्—आक्षेपेण निन्दया रूक्षाक्षराणि परुषवाक्यानि तैः मुखराणि वाचालानि मुखानि आननानि येषां तान्, दुर्जनान्—खलान्, दूषयन्तः—तिरस्कुर्वन्तः, (अतएव) साश्चर्यचर्याः साश्चर्या आश्चर्यान्विता चर्या आचरणं येषां तथाविधाः, सन्तः—सज्जनाः, जगति—लोके, बहुमताः—समादृताः, कस्य—जनस्य न अभ्यर्चनीयाः—न पूजनीयाः ?

**अनुवाद**—सबसे नव कर रहने पर भी उन्नत बने रहते, पराये का गुण गान करने अपना गुण फैलाते, पराये के हित-साधन का प्रयत्न करते हुए अपना स्वार्थ साधते, जिन दुर्जनों के मुख उनकी निन्दा करते रहते उन दुर्जनों के भद्दे-भद्दे आक्षेपों को सहकर उनको अपनी सहनशीलता से तिरस्कृत करते, ऐसे अद्भुत आचरण वाले सन्तजन संसार में किनके पूजनीय नही होते ?

Prospering by his humility, propagandising own merits by extolling those of others, achieving their own ends by attempting for the good of others, extensive big works, rebuking with their forbearance calumnitors (lit. wicked people) whose tongues (mouths) are clamorous with harsh syllables of accusation—good people of such wonderous behaviour are highly esteemed in the world. Who should not adore them ?

**संस्कृत-भावार्थ**—विनयशीलत्वेन उन्नति कुर्वन्तः परगुणकथनैः स्वान् गुणान् प्रकटयन्तः परकार्यसाधनपुरस्कारेणैव निजकार्याणि साधयन्तः सहनशीलतया एव दुर्जनपरुषवाक्यानि तिरस्कुर्वन्तः आश्चर्यचरित्राः सत्पुरुषाः कस्य न पूजनीयाः ? सर्वेषामपि पूजनीयाः सन्ति ।

**टिप्पणी**—(१) **नम्रत्वेन**—नम्रता से । करणे तृतीया । **उन्नमन्तः**—उन्नति करते हुए । उद्√नम्+लट्—शतृ । यहाँ विरोधाभास अलंकार है । (२) **परगुणकथनैः**—दूसरों के गुणों को कहने से । परेषां गुणाः (ष० त०), तेषां कथनानि (ष० त०), तैः । करणे तृतीया । (३) **ख्यापयन्तः**—फैलाते हुए √ख्या+णिच्, पुक्+शतृ । सज्जन गुणी एवं गुणग्राही, मानी एवं मानद दोनों होते हैं । (४) **परार्थे**—दूसरों के लिए । परेषाम् अर्थः प्रयोजनम् (ष० त०), तस्मिन् । (५) **विततपृथुतरारम्भयत्नाः**—विस्तृत एवं महान् कार्य के लिए प्रयत्नशील । वि√तन्+क्त कर्मणि=विततः । पृथु+तरप्=पृथुतरः । आ√रम्+घञ् भावे, 'उपसर्गात् खल्घञोः' इति सूत्रेण मुमागमः=आरम्भः । √यत्+न=यत्नः । वितताः च पृथुतराः च इति विततपृथुतराः (द्व० स०), तादृशाः आरम्भाः (कर्म० स०), विततपृथुतरारम्भेषु यत्नाः येषां ते (ब० स०) । (६) **क्षान्त्या**—क्षमा से । √क्षम्+क्तिन् भावे=क्षान्तिः, तया । करणे तृतीया । (७) **आक्षेपरूक्षाक्षरमुखरमुखान्**—निन्दा के रूखे अक्षरों से वाचाल मुख वाले । आ√क्षिप्+घञ्=आक्षेपः । मुख+र=मुखर । आक्षेपेण वा आक्षेपस्य रूक्षाक्षराणि (तृ० त० वा

ष० त०), आक्षेपस्क्षाक्षरैः मुखराणि (तृ० त०), आक्षेपरूक्षाक्षरमुखराणि मुखकृति येषां ते (ब० स०)। (८) दूषयन्तः—दूषित करते हुए या अपराधी ठहराते हुए। √दुष्+णिच्+लट्=शतृ (९) साश्चर्यचर्याः—आश्चर्ययुक्त आचरण वाले। आश्चर्येण सह वर्तमाना या सा साश्चर्या (तुल्ययोगे ब० स०), साश्चर्या चर्या येषां ते (ब० स०)। (१०) बहुमताः—बहुत आदरणीय या पूजनीय। √मन्+क्त कर्मणि=मताः, बहु यथा स्यात् तथा मताः बहुमताः (सुप्सुपा स०)। (११) अभ्यर्चनीयाः—सर्वतोभावेन पूजा करने योग्य। अभि√अर्च्+अनीयर्।

इस श्लोक के तीसरे चरण में कठोर अक्षरों के प्रयोग से यहाँ श्रुतिकटुत्व दोष आ गया है। इसमें काकुवक्रोक्ति अलंकार और स्रग्धरा छन्द है।

## अथ परोपकारपद्धतिः

**भवन्ति नम्रास्तरवः फलोद्गमैर्नवाम्बुभिर्दूरविलम्बिनो घनाः।**
**अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम्॥६२॥**

अन्वयः—तरवः फलोद्गमैः नम्राः भवन्ति, घनाः नवाम्बुभिः दूरविलम्बिनः (भवन्ति); सत्पुरुषाः समृद्धिभिः अनुद्धताः (भवन्ति) एषः परोपकारिणाम् स्वभावः एव (अस्ति)।

संस्कृत-व्याख्या—तरवः—वृक्षाः, फलोद्गमैः—फलानां प्रादुर्भावैः, नम्राः—अवनताः, भवन्ति—जायन्ते, घनाः—मेघाः, नवाम्बुभिः—नूतनैः वार्षिकजलैः, दूरविलम्बिनः—दूरपर्यन्तं भूमावतिनीचैः प्रदेशेष्विति यावत् विलम्बन्ते नम्रीभवन्तीति तथाभूताः (भवन्ति), सत्पुरुषाः—सज्जनाः, समृद्धिभिः—विभवैः, अनुद्धताः—अनुद्दण्डाः (भवन्ति), एष—अयम् परोपकारिणां—लोकोपकाररतानाम्, स्वभाव एव—प्रकृतिरेव (अस्ति)।

अनुवाद—फल के भार से वृक्ष नव जाते हैं, जल से भर जाने पर घटा आकाश में लटक जाती है; ऐसे ही सज्जन लोग समृद्धि पाकर उद्धत नहीं होते; परोपकारी जीवों का यही स्वभाव है।

Trees bend down with the advent of fruits. Clouds hang down very low on account of fresh rains (water). The good

come not puffed-up, with riches. Such, indeed is the benefactors of others.

संस्कृत-भावार्थ—यथा वृक्षाः फलोद्गमैः एवं मेघाः नवाम्बुभिः नम्रीभवन्ति तथा सत्पुरुषाः समृद्धिभिः विनम्राः भवन्ति; यतो हि परोपकारिणाम् एष स्वभावः खलु ।

टिप्पणी—(१) फलोद्गमैः—फलों के लगने से । फलानाम् उद्गमाः (ष० त०), तैः । हेतौ तृतीया । उद्√गम्+अप् 'ग्रहवृदृनिश्चिगमश्च' इत्यनेन=उद्-गम । (२) घनाः—बादल । √हन्+अप् 'मूर्तौ घनः' इत्यनेन । (३) नवाम्बुभिः नये जल से । नवानि अम्बूनि (कर्म० स०), तैः । हेतौ तृतीया । (४) दूरविल-म्बिनः—दूर तक लटकने वाले । दूरं विलम्बितुं शीलं येषां ते दूरविलम्बिनः दूर-वि√लम्ब्+णिनि कर्तरि ताच्छील्ये, (उपपद स०) । (५) सत्पुरुषाः—सज्जन लोग । सन्तः पुरुषाः (कर्म० स०) । (६) समृद्धिभिः—ऐश्वर्यों से । सम्√ ऋध्+क्तिन्=समृद्धयः, ताभिः । हेतौ तृतीया । (७) परोपकारिणाम्—दूसरे के उपकारकों का । उप√कृ+णिनि=उपकारिणः, परेषाम् उपकारिणः (ष० त०), तेषाम् ।

इस श्लोक के प्रथम तीन चरणों में एक ही 'भवन्ति' क्रिया से सबका अन्वय होने से क्रियादीपक अलंकार है । अचेतन वृक्ष और मेघ में चेतन में रहने वाले नम्रता और दूरविलम्बित गुण के अभेद रूप से वर्णन होने से अतिशयोक्ति है । विनय गुण के ही प्रकारान्तर से तीनों पदों में वर्णन होने से मालाप्रतिवस्तूपमा है । चतुर्थ चरण में अर्थान्तरन्यास है । इसमें वंशस्थ छन्द है । छन्द का लक्षण—'जतौ तु वंशस्थमुदीरितं जरौ' ।

विशेष—यह श्लोक 'अभिज्ञानशाकुन्तलम्' में आया है । इसलिए भर्तृहरि का यह अपना श्लोक नहीं है । ऐसे भर्तृहरि के कई श्लोक शतक से प्राचीन ग्रन्थों में मिलते है ।

वास्तविक आभूषण—

श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन ।
विभाति कायः करुणाकुलानां परोपकारेण न चन्दनेन ॥६३॥

अन्वयः—करुणाकुलानाम् श्रोत्रम् श्रुतेन विभाति कुण्डलेन न, पाणिः दानेन (विभाति) कङ्कणेन न, कायः परोपकारेण (विभाति) चन्दनेन न।

संस्कृत-व्याख्या—करुणाकुलानां—दयालूनां सत्पुरुषाणां, श्रोत्रं—कर्णः, श्रुतेन—वेदादिशास्त्रश्रवणेन, विभाति—शोभते, कुण्डलेन—कर्णवेष्टनेन, न—नहि (विभाति), पाणिः—हस्तः, दानेन—सत्पात्रत्यागेन (विभाति), कङ्कणेन—कनकवलयेन, न (विभाति), कायः—देहः, परोपकारेण—परेषां हितसाधनेन (विभाति), चन्दनेन—चन्दनलेपनेनेति यावत् न (विभाति)।

अनुवाद—करुणामय पुरुषों के कान की शोभा शास्त्र-श्रवण से है, कुण्डल से नहीं। हाथ की शोभा दान से, न कि कङ्कण पहनने से और शरीर परोपकार से शोभता है, न कि चन्दन लगाने से।

The ear of the benevolent shines by listening to Vedic lore and not with an ear-ring, his hand with charity and not with a bangle, his body, with beneficence and not with sandal paint.

संस्कृत-भावार्थ—महात्मनां शास्त्रपुराणश्रवणदानपरोपकारा एव भूषणं न तु कुण्डलकङ्कणचन्दनानि।

टिप्पणी—(१) करुणाकुलानाम्—करुणा से विह्वल, परम दयालु। करुणया आकुलाः (तृ० त०), तेषाम्। (२) श्रोत्रम्—कान। √श्रु+ष्ट्रन् (त्र)। (३) श्रुतेन—शास्त्र—शास्त्रज्ञान—वेदशास्त्र-श्रवण। √श्रु+क्त (त) (भावे) =श्रुतम्=श्रवणम्। करणे तृतीया। 'श्रुतं शास्त्रावधृतयोः' इति विश्वः। (४) कुण्डलेन—कुंडल से।यहाँ सभी तृतीयान्त पदों में करणे तृतीया है। (५) कायः—शरीर। चीयते अस्मिन् अस्थ्यादिकम् इति कायः √चि+घञ् (अ)। चि धातु के रूप—चिनोति (लट्), चिकाय—चिचाय (लिट्), अचैषीत् (लुङ्)।

इस श्लोक में कुंडल, कङ्कण तथा चन्दन का पूर्ण रूप से निषेध करके कान, हाथ तथा शरीर की शोभा क्रमशः शास्त्रश्रवण, दान तथा उपकार से बतलायी गई है, अतः परिसंख्या अलंकार है। 'किञ्चित्पृष्टमपृष्टं वा कथितं यत्प्रकल्पते। तादृगन्यव्यपोहाय परिसंख्या तु सा स्मृता'। इसमें उपजाति छन्द है।

सज्जनों को प्रेरणा की आवश्यकता नहीं—

पद्माकरं दिनकरो विकचं करोति
चन्द्रो विकासयति कैरवचक्रवालम्।

नाभ्यर्थितो जलधरोऽपि जलं ददाति
सन्तः स्वयं परहिते विहिताभियोगाः ॥६४॥

अन्वयः—दिनकरः नाभ्यर्थितः (सन्) पद्माकरम् विकचम् करोति । चन्द्रः (नाभ्यर्थितः) कैरवचक्रवालम् विकासयति, जलधरः अपि (नाभ्यर्थितः सन्) जलम् ददाति । सन्तः स्वयम् परहिते विहिताभियोगाः (भवन्ति) ।

संस्कृत-व्याख्या—दिनकरः—सूर्यः, नाभ्यर्थितः—न प्रार्थितः (सन्) पद्माकरं—कमलवनं, विकचं—प्रफुल्लं, करोति—विदधाति, चन्द्रः—इन्दुः, (नाभ्यर्थितः) कैरवचक्रवालं—कुमुदषण्डं वा कुमुदानि, विकासयति—विकचयति, जलधरः—मेघः, अपि, (नाभ्यर्थितः) जलं—पानीयं, ददाति—वर्षति । सन्तः—सत्पुरुषाः, स्वयम्—आत्मनैव, परहिते—अन्येषां हितसाधने, विहिताभियोगाः—विहितः कृतः अभियोगः अभिनिवेशः यैः तादृशाः (भवन्ति) ।

अनुवाद—सूर्य कमलों को खिलाता है, चन्द्रमा कुमुदिनी के समूह को खिलाता है, मेघ भी बिना किसी के विनती करने पर ही जल बरसाता है । सन्त लोग अपने ही आप, किसी के प्रार्थना न करने पर भी, परोपकार करने का आग्रह करते हैं ।

The sun, though unsolicited, makes the multitude of lotuses bloom, the moon, though unasked, causes the circle of the lilies to bloom, the cloud showers rain (water) though unimplored. Good people, of their own accord, persist in doing good to others.

संस्कृत-भावार्थ—सूर्यः कमलवनं विकसितं करोति; तत्र न कश्चन तं तथा कर्तुं प्रार्थयते । कुमुदानि विकासयितुं चन्द्रमसमपि न कश्चन अभ्यर्थयते तथापि सः तानि विकासयति । मेघोऽपि प्रार्थनामन्तरैव जलं ददाति । अनेन ज्ञायते यत् सज्जनाः अनुक्ता अपि परेषां हितकारकं कर्म कर्तुं स्वयं प्रवृत्ता भवन्ति ।

टिप्पणी—(१) दिनकरः—सूर्य । दिनं करोतीति दिनकरः दिन√कृ+ट(अ) 'कृञो हेतुताच्छील्यानुलोम्येषु' इत्यनेन । (२) नाभ्यर्थितः—बिना माँगे ही । अभि√अर्थ्+क्त कर्मणि=अभ्यर्थितः । न अभ्यर्थितः (सुप्सुपा स०) । (३) पद्माकरम्—कमल-समूह या कमल-वन को । पद्मानाम् आकरः (ष० त०),

तम्। कर्मणि द्वितीया। (४) विकचम्—विकसित। विगतः कचः अस्मात् इति विकचः (प्रा० ब० स०), तम्। (५) कैरवचक्रवालम्—कुमुदों के समूह को। कैरवाणां चक्रवालम् (ष० त०), तत्। (६) जलधरः—बादल। मेघ। धरतीति धरः√धृ+अच् पचादित्वात्। जलस्य धरः जलधरः (ष० त०)। 'एवं गंगाधरभूधरादयः' इति सिद्धान्तकौमुदी। (७) परहिते—दूसरों की भलाई (के कार्य) में। √धा+क्त भावे=हितम्। परेषां हितम् (ष० त०), तस्मिन्। विषयाधिकरणे सप्तमी। (८) विहिताभियोगाः—दृढ आग्रह से युक्त। वि√धा+क्त कर्मणि=विहित। अभि√युज्+घञ् (अ) भावे=अभियोग। विहितः कृतः अभियोगः अभिनिवेशः यैः ते विहिताभियोगाः (ब० स०)। भाव यह है कि सज्जन पुरुष बिना कहे ही लोगों की भलाई के लिए कटिबद्ध रहते हैं।

इस श्लोक में अर्थान्तरन्यास अलंकार है और वसन्ततिलका छन्द है।

मनुष्यों की चार श्रेणियाँ—

**एते सत्पुरुषाः परार्थघटकाः स्वार्थान् परित्यज्य ये**
**सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये।**
**तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये**
**ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥६५॥**

अन्वयः—ये स्वार्थान् परित्यज्य परार्थघटकाः एते सत्पुरुषाः, ये स्वार्थाविरोधेन परार्थम् उद्यमभृतः (ते) तु सामान्याः, ये स्वार्थाय परहितम् निघ्नन्ति ते अमी मानुषराक्षसाः। ये तु निरर्थकम् परहितम् घ्नन्ति ते के इति न जानीमहे।

संस्कृत-व्याख्या—ये—पुरुषाः, स्वार्थान्—स्वप्रयोजनानि, परित्यज्य—त्यक्त्वा, परार्थघटकाः—अन्यप्रयोजनसाधकाः, एते, सत्पुरुषाः—पुरुषोत्तमाः, ये—पुरुषाः, स्वार्थाविरोधेन—स्वार्थस्य अविरोधेन असंघट्टनेन स्वार्थसाधनापूर्वकमिति यावत्, परार्थम्—परप्रयोजननिर्वाहार्थम्, उद्यमभृतः उद्यमशीलाः, (ते) तु, सामान्याः—साधारणाः जनाः, ये, स्वार्थाय—स्वप्रयोजनसाधनाय, परहितं—परप्रयोजनं, निघ्नन्ति—नाशयन्ति, ते, अमी, मानुषराक्षसाः—मानुषेषु मनुष्येषु, राक्षसाः दानवाः, ये, तु, निरर्थकं—निष्फलं, परहितं—परप्रयोजनं, घ्नन्ति—नाशयन्ति, ते—पुरुषाः, के, इति, वयं, न जानीमहे—न विद्मः।

अनुवाद—पराये के हित के लिये जो अपने हित का ख्याल नहीं करते हैं वे उत्तम, जो अपने हित को विना कुछ हानि किये ही औरों का हित करते हैं वे सामान्य-साधारण, और जो अपनी भलाई के लिये औरों के हित को नष्ट करते हैं वे अधम हैं, मनुष्य नामधारी राक्षस हैं। पर जो व्यर्थ ही पराये के हित की हानि करते हैं उनको हम क्या कहें—नहीं जानते।

Those who do good to others giving up their own self-interests, are good people and those are ordinary people who try to do good to others without harming their own interest, while those who destroy others' good for their own are demons among men, we do not know what are they who destroy good of others without any purpose.

संस्कृत-भावार्थ—ये स्वार्थम् उपेक्ष्य परहितं साधयन्ति ते सत्पुरुषाः; ये स्वार्थसाधनपूर्वकं परार्थं साधयन्ति ते सामान्याः जनाः; ये स्वार्थाय परहितं नाशयन्ति ते मनुष्येषु दानवाः सन्ति; परन्तु ये निरर्थकं परहितं निघ्नन्ति ते परमनीचाः जनाः कियामतो व्यवहरणीयाः इति वयं न जानीमहे, सुधियो विभावयन्तु।

टिप्पणी—(१) परार्थघटकाः—दूसरों का प्रयोजन सिद्ध करने वाले। घटयन्ति इति घटकाः √घट्+णिच्+ण्वुल्। परेषाम् अर्थाः परार्थाः (ष० त०), तेषाम् घटकाः सम्पादकाः (ष० त०)। (२) एते—यह सर्वनाम 'ये' के लिए आया है। प्रायः देखा जाता है कि 'ये' के लिए 'ते' ही आता है, किन्तु 'यत्तदर्थयोर्नित्योऽभिसम्बन्धः' इस नियम के अनुसार यत् शब्द तत् शब्द तथा तत्शब्द-समानार्थक अदस् आदि शब्दों की अपेक्षा रखता है। इसलिए यहाँ 'यत्—ये' के लिए 'एतत्—एते' का प्रयोग अनुचित नहीं है। (३) स्वार्थाविरोधेन—स्वार्थ का विरोध न करके या स्वार्थ को न छोड़कर। स्वस्य अर्थः (ष० त०), न विरोधः अविरोधः (न० त०), स्वार्थस्य अविरोधः (तृ० त०), तेन। करणे तृतीया। (४) परार्थम्—दूसरों के कार्य के लिए। परेभ्यः इदम् इति परार्थम् (नित्य तत्पुरुष स०) 'अर्थेन नित्यसमासो विशेष्यलिङ्गता च' इत्यनेन। (५) उद्यमभृतः—प्रयत्नशील। उद्√यम्+अप्=उद्यम। उद्यमं बिभ्रति इति उद्यम √भृ+क्विप्, तुक् आगम। (६) स्वार्थाय—अपने प्रयोजन के लिए। स्वस्य अर्थः स्वार्थः (ष० त०), स्वार्थं साधयितुम् इति स्वार्थाय 'क्रियार्थोपपदस्य च

कर्मणि स्थानिनः' इति सूत्रेण चतुर्थी। (७) मानुषराक्षसाः—मनुष्यों में राक्षस। मनोर्जातः मनुष्यः मनु+अञ्, षुगागम। मनुष्य एव मानुषः मनुष्य+अण्, वृद्धि, यलोप। मनु प्रजापति की एक कन्या थी। उसी से मनुष्य जाति की उत्पत्ति हुई। मानुषेषु राक्षसाः (स० त०) अथवा मानुषाः राक्षसाः इव (उपमित स०)। (८) निरर्थकम्—व्यर्थ में। निर्गतः अर्थः यस्मात् तत् निरर्थकम् (ब० स०), समासान्तः कप्प्रत्ययः, क्रियाविशेषणे द्वितीया। (९) जानीमहे—√ज्ञा+लट् 'अनुपसर्गाज्ज्ञः' इति सूत्रेणात्मनेपदम्।

इस श्लोक में शार्दूलविक्रीडित छन्द है।

सन्मित्र का लक्षण—

पापान्निवारयति योजयते हिताय
गुह्यं निगूहति गुणान्प्रकटीकरोति।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥६६॥

अन्वयः—पापात् निवारयति, हिताय योजयते, गुह्यम् निगूहति, गुणान् प्रकटीकरोति, आपद्गतम् न जहाति, काले च ददाति, इदम् सन्तः सन्मित्रलक्षणम् प्रवदन्ति।

संस्कृत-व्याख्या—पापात्—दुष्कर्मणः, निवारयति—निवर्तयति, हिताय—सत्कर्मणे कल्याणाय वा, योजयते—प्रवर्तयते, गुह्यं—गोप्यं, निगूहति—आच्छादयति, गुणान्—दयादाक्षिण्यादिसद्गुणान्, प्रकटीकरोति—प्रख्यापयति, आपद्गतं—संकटस्थं, न जहाति—न त्यजति, काले—व्यसनादिसमये, च, ददाति—धनादिकं प्रयच्छति, इदम्—एतत्, सन्तः—सत्पुरुषाः, सन्मित्रलक्षणं—सन्मित्रस्य सुहृदः लक्षणं स्वरूपं, प्रवदन्ति—कथयन्ति।

अनुवाद—पाप करने से अलग रखता, अच्छा काम करने में लगाता, (मित्र की) छिपाने योग्य बात छिपाता और (उसके) गुणों को फैलाता, विपद्ग्रस्त देखकर न छोड़ता, समय आने पर कुछ देता—सन्त जन सच्चे मित्र का यही लक्षण बतलाते हैं।

Good people thus describe the characteristic of a good friend. He dissuades (friend) from sin, persuades (him) to good

-tion conceals (his) secrets publishes (his) merits, forsakes (him) not when in distress, and gives (him) in the time of need.

संस्कृत-भावार्थ—सन्मित्रं तदेव यत् स्वमित्रं पापाचरणात् निवारयति सत्कर्मणि प्रवर्तयति तस्य गोप्यं विषयं निगूहति गुणान् प्रकटीकरोति विपत्तिग्रस्तमपि तत् न त्यजति तथा समयोचितं साहाय्यं करोति ।

टिप्पणी—(१) पापात्—बुरे कामों से । अत्र 'वारणार्थानामीप्सितः' इति सूत्रेण पञ्चमी । (२) निवारयति—रोकता है । नि√वृ+णिच्+लट्—तिप् । (३) हिताय—भलाई का काम करने के लिए । अत्र 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति सूत्रेण चतुर्थी । हितम् आचरितुं योजयते । (४) निगूहति—छिपाता है । नि√गुह्+लट्—तिप् । √गुह्+क्त=गूढ । √गुह्+तुमुन्=गुहितुम् वा गोढुम् √गुह्+क्त्वा=गूहित्वा वा गुहित्वा । (५) प्रकटीकरोति—प्रकट करता है । अप्रकटान् प्रकटान् करोति इति प्रकट+च्वि√कृ+लट्—तिप् 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' इत्यनेन, ततः 'अस्य च्वौ' इत्यनेन ईत्वम् । (६) जहाति—छोड़ता है । √हा (त्यागे)+लट्—तिप् । जहाति, जहौ, अहासीत् । (७) काले ददाति—समय पर देता है अर्थात् आवश्यकता के समय अपने मित्र की सहायता करता है । (८) सन्तः—सत्पुरुष । √अस्+लट्—शतृ=सत् सन्तौ सन्तः । यहाँ 'विशेषणमात्रप्रयोगो विशेष्यप्रतिपत्तौ' इस वामनोक्ति के अनुसार 'सन्तः' का प्रयोग संज्ञा के रूप में हुआ है । यहाँ प्रश्न होता है कि 'लटः शतृशानचौ अप्रथमासमानाधिकरणे' सूत्र से 'सन्तः' इस प्रथमान्त पद में शतृ नहीं होना चाहिए, किन्तु सिद्धान्तकौमुदी में उसी सूत्र पर ऐसे स्थलों के लिए उत्तर दे दिया गया है—'लडित्यनुवर्तमाने पुनर्लड्ग्रहणमधिकविधानार्थम् । तेन प्रथमासामानाधिकरण्येऽपि क्वचित् । सन् ब्राह्मणः ।' (९) इदम्—यहाँ 'नपुंसकमनपुंसकेन एकवत् चान्यतरस्याम्' सूत्र से एकवद्भाव तथा नपुंसक सर्वनाम का एकशेष हुआ । (१०) सन्मित्रलक्षणम्—सच्चे मित्र का लक्षण । सत् मित्रम् (कर्म० स०), तस्य लक्षणम् (ष० त०) ।

इस श्लोक में वसन्ततिलका छन्द है ।

सज्जनों की मैत्री का दृष्टान्त—

क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः
क्षीरोत्तापमवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः ।

**गन्तुं पावकमुन्मनस्तदभवद् दृष्टवा तु मित्रापदं**
**युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी ॥६७॥**

अन्वयः—क्षीरेण आत्मगतोदकाय पुरा ते अखिलाः गुणाः दत्ता हि । क्षीरोत्तापम् अवेक्ष्य तेन पयसा स्वात्मा कृशानौ हुतः । तत् (कर्तृपदम्) तु मित्रापदम् दृष्ट्वा पावकम् गन्तुम् उन्मनाः अभवत् । तेन जलेन युक्तम् (सत्) (क्षीरम्) शाम्यति । सताम् मैत्री पुनः तु ईदृशी ।

संस्कृत-व्याख्या—क्षीरेण—दुग्धेन, आत्मगतोदकाय—आत्मानं गतं प्राप्तम् उदकं जलं तस्मै स्वाङ्गभूतजलायेति यावत्, पुरा—पूर्वम्, ते—प्रसिद्धाः, अखिलाः—समस्ताः, गुणाः—माधुर्यधावल्यादिकाः, दत्ताः हि—वितीर्णाः खलु । क्षीरोत्तापम्—क्षीरस्य (श्रपणार्थम् अग्न्युपरि निहितस्य) दुग्धस्य उत्तापं सन्तपनम्, अवेक्ष्य—दृष्ट्वा, तेन—क्षीरमिश्रितेन, पयसा—जलेन, स्वात्मा—स्वशरीरं, कृशानौ—वह्नौ, हुतः—मित्रसन्तापस्य असहनात् संशोषित इत्यर्थः । तत्—क्षीरं (कर्तृ), मित्रापदं—मित्रस्य जलस्य आपदं संशोषणरूपां विपत्तिं, दृष्ट्वा—अवलोक्य, पावकम्—अग्निं, गन्तुं—यातुम्, उन्मनः—उद्युक्तम्, अभवत्—जातम् । तेन, जलेन—वारिणा, युक्तम्—अन्वितं (सत्), (क्षीरं) शाम्यति—प्रशान्तं भवति । सतां—सज्जनानां, मैत्री—मित्रता, पुनः—भूयः, तु, ईदृशी—परस्परदुःखासहनशीला (भवति) ।

अनुवाद—पहले दूध ने अपने में मिले जल में अपने सारे गुण दे डाले (रंग, रूप, मिठास इत्यादि) । इसलिये अपने मित्र के दुःख को देखकर—उसको औटाये जाते देख जल ने पहले अग्नि में अपनी आत्माहुति कर दी । पर अपने मित्र जल को आग में जलता देख दूध (उफना कर) आग में कूद पड़ना चाहता । लेकिन जब उफनाते हुए दूध पर जल छिड़का जाता है तब वह शान्त हो जाता है । सज्जनों की मित्रता ऐसी ही होती है ।

At first, milk imparted all its qualities to water mingled with it; on seeing the distress (heating) of milk. Water sacrificed itself into the fire (*i. e.* was evaporated), but seeing the distress of its friend, it (milk) became very anxious to throw itself into the fire (*i.e.* began to boil over); but it became pacified when water was sprinkled over it. Such is indeed the friendship of the good.

**संस्कृत-भावार्थ**—सज्जनानां मैत्री परस्परदुःखासहनशीला भवति । यथा दुग्धजलयोर्मैत्रीं पश्य—दुग्धेन आत्मगतोदकाय स्वकीयाः माधुर्यधावल्यादिकाः समस्ताः गुणाः दीयन्ते । अतः अपणार्थम् अग्न्युपरि निहितस्य दुग्धस्य सन्तपनं दृष्ट्वा मित्रसन्तापस्य असहनात् जलेन स्वशरीरं वह्नौ संशोष्यते । ततः दुग्धं मित्रस्य जलस्य विपत्ति दृष्ट्वा आत्मानं वह्नौ निक्षेप्तुकामं भवति । तदनन्तरं तेन जलेन युक्तं (सिक्तं) सत् दुग्धं प्रशान्तं भवति ।

**टिप्पणी**—(१) **क्षीरेण**—दूध । अनुक्ते कर्तरि तृतीया । (२) **आत्मगतोदकाय**—अपने में मिले हुए जल को । आत्मानं गतः इति आत्मगतः (द्वि० त०), तादृशम् उदकम् (कर्म० स०), तस्मै । सम्प्रदाने चतुर्थी । (३) **क्षीरोत्तापम्**—दूध का दुःख (उबाला जाना) । उद्√तप्+घञ् भावे=उत्तापः । क्षीरस्य उत्तापः (ष० त०), तम् । कर्मणि द्वितीया । (४) **कृशानौ**—अग्नि में । अधिकरणे सप्तमी । (५) **हुतः**—होम कर दिया, जला दिया । √हु (जुहोत्यादि)+क्त कर्मणि । (६) **मित्रापदम्**—मित्र की विपत्ति को । आ√पद्+क्विप् 'सम्पदादिभ्यः क्विप्' इत्यनेन=आपत् । मित्रस्य आपत् (ष० त०), ताम् । (७) **उन्मनः**—उद्विग्न । उद्गतं मनो यस्य तत् उन्मनस् (ब० स०) । दूध में जो उफान आती है, उसके लिए कवि उत्प्रेक्षा करता है कि दुध अपने मित्र जल को जलते देखकर उसके दुःख को सहन न कर सकने के कारण स्वयं आग में कूद पड़ना चाहता है । (८) **युक्तम्**—मिल जाने पर । √युज्+क्त । उफनाते हुए दूध में जल छिड़क देने से उफान हट जाती है । कवि कल्पना करता है कि पुनः मित्र जल के मिल जाने से दूध शान्त हो जाता है । (९) **मैत्री**—मित्रता । मित्रस्य भावः मैत्री मित्र+अण्+ङीप् । मित्र से ष्यञ् प्रत्यय करने पर मैत्र्यम् होता है ।

इस श्लोक में उत्प्रेक्षा तथा अर्थान्तरन्यास अलंकारों का संकर है ।

महान् की महत्ता—

इतः स्वपिति केशवः कुलमितस्तदीयद्विषां
इतश्च शरणार्थिनां शिखरिणां गणाः शेरते ।
इतोऽपि वडवानलः सह समस्तसंवर्तकैः
अहो ! विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥६८॥

**अन्वयः**—इतः केशवः स्वपिति, इतः तदीयद्विषाम् कुलम् (स्वपिति) इतः च शरणार्थिनाम् शिखरिणाम् गणाः शेरते, इतः अपि समस्तसंवर्तकैः सह वडवानलः (शेते)। अहो ! सिन्धोः वपुः विततम् ऊर्जितम् भरसहम् च अस्ति।

**संस्कृत-व्याख्या**—इतः—एकस्मिन् प्रदेशे, केशवः—विष्णुः, स्वपिति—शेते। इतः—अन्यस्मिन्—प्रदेशे, तदीयद्विषां—तदीयाः द्विषः विष्णोः शत्रवः कालकेयादयः तेषां, कुलं—समूहः, (स्वपिति)। इतः च—अन्यस्मिन् प्रदेशे, शरणार्थिनाम्—आश्रयकाङ्क्षिणां, शिखरिणां—पर्वतानां, गणाः—समूहाः, शेरते—अवतिष्ठन्ते। इतः अपि—अन्यस्मिन् देशे अपि, समस्तसंवर्तकैः—समस्तैः सकलैः संवर्तकैः प्रलयकालवर्षिमेघविशेषैः, सह—साकं, वडवानलः—औवाग्निः (शेते)। अहो—आश्चर्यम्, सिन्धोः—समुद्रस्य, वपुः—शरीरं, विततं—विस्तृतम्, ऊर्जितम्—ऊर्जस्वलम्, भरसहं—भारोद्वहनक्षमं, च, अस्ति।

**अनुवाद**—इधर विष्णु सोते, उधर उनके शत्रुगण, इधर शरणार्थी पर्वत-समूह सोते, उधर वड़वानल समस्त संवर्तक मेघों के सहित; अहो ! समुद्र का शरीर कितना विस्तृत, सबल और भार सहने वाला है।

Hither sleeps Lord Vishnu, thither the host of his enemies and here sleep the multitudes of mountains seeking shelter (into it), there again the submarine fire along with all the clouds down-pouring at the end of the creation. Oh ! how extensive, powerful and load-bearing is the body of the ocean.

**संस्कृत-भावार्थ**—सागरे एकतः विष्णुः स्वपिति अपरतश्च तदीयाः शत्रवः कालकेयादयः अवतिष्ठन्ते। एकस्मिन् प्रदेशे पर्वताः सन्ति अपरस्मिन् भागे पुष्करावर्तकनामकाः मेघाः वडवानलश्च विद्यन्ते। अहो ! केशवादिसकलभारधारण-समर्थं समुद्रस्य शरीरं कियद् विस्तृतम् ऊर्जस्वलं च वर्तते !

**टिप्पणी**—(१) केशवः—विष्णु। प्रशस्ताः केशाः सन्ति अस्य इति केशवः केश+व 'केशाद्वोऽन्यतरस्याम्' इत्यनेन। केशव कृष्ण का नाम है; किन्तु कृष्ण विष्णु के अवतार हैं, इसलिए यहाँ केशव विष्णु के लिए प्रयुक्त हुआ है। क्योंकि विष्णु ही क्षीरसागर में सोते हैं न कि कृष्ण। 'क्षीरशायी विष्णुरूपः' इत्यमरः। 'अमुं युगान्तोचितयोगनिद्रः' (रघु० १३)। (२) तदीयद्विषाम्—उन (विष्णु) के शत्रुओं का (कुल=समूह)। तस्य इमे इति तदीयाः तत्+छ—ईय। तदीयाः

द्विषः (कर्म० स०), तेषाम् । √द्विष्+क्विप्=द्विषः । विष्णु के शत्रु कालकेय आदि समुद्र में छिप गये थे । देखिए—महाभारत—वनपर्व १०१ । (३) शरणार्थिनाम्—शरण चाहने वाले । जब इन्द्र पर्वतों के पंख काटने लगे ये तब बहुत-से पर्वत समुद्र में जाकर छिप गए थे । 'पक्षच्छिदा गोत्रभिदात्तगन्धाः शरण्यमेनं शतशो महीध्राः' (रघु० १३, ३६) । शरणम् अर्थयन्ते इति शरणार्थिनः शरण√अर्थ+णिनि, उपपद स० तेषाम् । (४) शिखरिणाम्—पर्वतों के । शिखराणि सन्ति एषाम् इति शिखरिणः शिखर+इनि, तेषाम् । (५) समस्तसंवर्तकैः—सम्पूर्ण संवर्तक आदि मेघों के साथ । ये मेघ प्रलयकाल में संसार को जल से आप्लावित करने वाले माने जाते हैं । समस्ताः संवर्तकाः (कर्म० स०), तैः । 'सहयुक्तेऽप्रधाने' इति सूत्रेण तृतीया । (६) वडवानलः—वडवाग्नि । यह अग्नि समुद्र के जल को जलाता है (देखिए नीचे विशेष) । यह हिन्द महासागर के दक्षिणी भाग में बहुधा दिखाई पड़ता है—'गर्भं दधत्यर्कमरीचयोऽस्माद्विवृद्धिमत्राश्नुवते वसूनि । अविन्धनं वह्निमसौ बिभर्ति प्रह्लादनं ज्योतिरजन्यनेन ॥ (रघु० १३।३) । (७) भरसहस्य—भार सहन करने वाला । सहते इति सहम् √सह+अच् पचादित्वात्, भरस्य सहम् (प० त०) । समुद्र का शरीर कितना विस्तृत, सबल एवं भारसहिष्णु है यह इसी से पता चलता है कि प्रलय के पश्चात् संसार को अपने अन्दर लीन करके विष्णु इसमें शयन करते हैं । कालकेय आदि राक्षस, वडवाग्नि तथा बड़े-बड़े पर्वतों को इसने अपने भीतर धारण कर रखा है ।

इस श्लोक में अधिक अलंकार और अप्रस्तुतप्रशंसा अलंकार हैं । इसमें पृथ्वी छन्द है ।

विशेष—मत्स्यपुराण के अनुसार एक बार और्वनामक मुनि अग्नि में अपना ऊरु (जांघ) डालकर कुशा से मंथन करने लगे । अनन्तर उनके ऊरु से अग्नि उत्पन्न हुआ जो संसार को जलाने लगा । जब ब्रह्मा ने यह देखा तो मुनि को किसी तरह शान्त किया और उस अग्नि को समुद्र-गर्भ-स्थित वडवा (घोड़ी) के मुंह में स्थापित करके उसके भक्ष्य के लिए समुद्र का जल निर्दिष्ट कर दिया ।

जन्म-धारण की सफलता इसी में है कि कोई विशेष कार्य करे—

**जातः कूर्मः स एकः पृथुभुवनभरायार्पितं येन पृष्ठं**
**श्लाघ्यं जन्म ध्रुवस्य भ्रमति नियमितं यत्र तेजस्विचक्रम् ।**

**संजातव्यर्थपक्षाः परहितकरणे नोपरिष्टान्न चाधो**
**ब्रह्माण्डोदुम्बरान्तर्मशकवदपरे जन्तवो जातनष्टाः ॥६६॥**

अन्वयः—एकः सः कूर्मः (एव) जातः येन पृथुभुवनभराय पृष्ठम् अर्पितम् । ध्रुवस्य जन्म श्लाघ्यम् यत्र तेजस्विचक्रम् नियमितम् भ्रमति । परहितकरणे संजातव्यर्थपक्षाः अपरे जन्तवः उपरिष्टात् न, अधः च न (वर्तमाना भवन्ति) ब्रह्माण्डोदुम्बरान्तर्मशकवत् जातनष्टाः भवन्ति ।

संस्कृत-व्याख्या—एकः—केवलः, सः—प्रसिद्धः, कूर्मः—कच्छपः (विष्णोः अवतारः) (एव) जातः—उत्पन्नः, येन—कूर्मेण, पृथुभुवनभराय—पृथु महत् यत् भुवनं जगत् तस्य भारः तस्मै, पृष्ठं—निजकूर्परतलम्, अर्पितम्—दत्तम् । ध्रुवस्य-औत्तानपादेः, जन्म—जननं, श्लाघ्यं—प्रशंसनीयं, यत्र—यस्मिन् ध्रुवे, तेजस्विचक्रं—तेजस्विनां ग्रहनक्षत्रादीनां चक्रं मण्डलं, नियमितं—नियतरूपेण, भ्रमति—पर्यावर्तते । परहितकरणे—परोपकाराचरणविषये, संजातव्यर्थपक्षाः—असमर्थपक्षाः, अपरे—अन्ये, जन्तवः—प्राणिनः, उपरिष्टात् न—उपरिभागेऽपि वर्तमानाः न भवन्ति इत्यर्थः, अधः—नीचैः, च न (वर्तमाना भवन्ति इत्यर्थः), (किन्तु) ब्रह्माण्डोदुम्बरान्तर्मशकवत्—ब्रह्माण्डम् एव उदुम्बरम् तस्य अन्तः मध्ये ये मशकाः कीटाः तद्वत् जातनष्टाः भवन्ति—उत्पन्ना भूत्वा म्रियन्ते ।

अनुवाद—उसी एक कच्छप-देव का जन्म लेना सफल है जिसने पृथ्वी के भार को ढोने के लिये अपनी पीठ अर्पण कर दी । ध्रुव का जन्म लेना प्रशंसनीय है जहाँ यह ताराग्रह-समूह नियमपूर्वक घूमता रहता है । और सब दूसरे प्राणधारी, जो परोपकार करने में असमर्थ हों तथा न तो ऊपर गये और न नीचे, वे इस जगत् में जनमने के बाद उसी तरह व्यर्थ मर जाते हैं जैसे गूलर के कीड़े ।

That very tortoise alone was (really) born who offered his back to bear the burden of the vast world. Praiseworthy was the birth of Dhruva, round whom the cluster of luminaries revolves; other animals being unable to do good to others are neither in upper regions nor in lower regions. They die after they are born like the worms inside the universe like fig-fruit.

संस्कृत-भावार्थ—एकः कच्छप एव जन्मलाभवान् येन भुवनभारवहनार्थं स्वपृष्ठम् अर्पितम्; ध्रुवस्यापि जन्म सार्थकं यस्मिन् ग्रहनक्षत्रादयो भ्रमन्ति, पर

हित-साधने असमर्थाः अन्ये जन्तवस्तु उदुम्बरकीटवत् जातनष्टा भवन्ति। यतः न किमपि तैः साधितम्, अतस्तेषां जन्म निरर्थकम्।

टिप्पणी—(१) **पृथुभुवनभराय**—विशाल पृथ्वी के भार (को ढोने) के लिए। पृथु भुवनम् (कर्म० स०), तस्य भरः (प० त०), तं वोढुम् इति 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' इति सूत्रेण चतुर्थी। हिन्दुओं का विश्वास है कि विष्णु भगवान् कच्छप अवतार धारण करके अपनी पीठ पर पृथ्वी का भार वहन कर रहे हैं। (२) **तेजस्विचक्रम्**—ग्रहों एवं नक्षत्रों का समूह अथवा शिशुमार-मंडल। तेजस्विनां चक्रम् (प० त०)। (३) **नियमितम्**—नियमपूर्वक। नियम+णिच् (नामधातु)+क्त कर्मणि=नियमितम् तत् यथा स्यात् तथा क्रियाविशेषणे द्वितीया। (४) **परहितकरणे**—परोपकार करने में। परेषां हितानि (प० त०), तेषां करणम् (ष० त०), तस्मिन्। (५) **संजातव्यर्थपक्षाः**—जिनका पक्षग्रहण व्यर्थ हो गया हो अर्थात् असमर्थ। व्यर्थः संजातः इति संजातव्यर्थः (सुप्सुपा स०), तादृशः पक्षः येषां ते संजातव्यर्थपक्षाः (ब० स०)। इसका सम्बन्ध 'पर-हितकरणे' से है, इसलिए 'सापेक्षत्वेऽपि गमकत्वात् समासः' है। अथवा व्यर्थः पक्षः येषां ते व्यर्थपक्षाः (ब० स०), संजाताः व्यर्थपक्षाः (कर्म० स०)। यहाँ संजात शब्द अनावश्यक है, इसलिए अविकपदजन्य दोष है। (६) **ब्रह्माण्डो-दुम्बरान्तर्मशकवत्**—ब्रह्माण्ड रूपी गूलर के कीड़ों की भाँति। उदुम्बरवृक्षस्य फलम् इति उदुम्बर+अण्, तस्य लुक् 'फले लुक्' इत्यनेन। ब्रह्माण्डम् एव उदुम्बरम् (मयूरव्यंसकादित्वात् रूपकरूप स०), तस्य अन्तः (प० त०), तत्र मशकाः ब्रह्माण्डोदुम्बरान्तर्मशकाः (सुप्सुपा स०), तद्वत् 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिप्रत्ययः। (७) **जातनष्टाः**—जन्म लेकर मरते हैं। पूर्वं जाताः पश्चात् नष्टाः इति जातनष्टाः स्नानानुलिप्तवत् तत्पुरुषसमासः 'पूर्वकालैकसर्व-जरत्पुराणनवकेवलाः समानाधिकरणेन' इत्यनेन। गूलर के फल के कीडे उसके भीतर जन्म लेते हैं और मर जाते हैं, उसी तरह जो व्यक्ति दूसरे की भलाई के लिए कोई काम नहीं करता है वह व्यर्थ जन्म लेता है और मरता है।

इस श्लोक में रूपक और उपमा अलंकारों का संकर है। इसमें स्रग्धरा छन्द है। छन्द का लक्षण—'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्'।

सज्जनों के लक्षण

**तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः**
**सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनम् ।**
**मान्यान्मानय विद्विषोऽप्यनुनय प्रख्यापय प्रश्रयं**
**कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां लक्षणम् ।।७०।।**

अन्वयः—तृष्णाम् छिन्धि, क्षमाम् भज, मदम् जहि, पापे रतिम् मा कृथाः, सत्यम् ब्रूहि, साधुपदवीम् अनुयाहि, विद्वज्जनम् सेवस्व, मान्यान् मानय, विद्विषः अपि अनुनय, प्रश्रयम् प्रख्यापय, कीर्तिम् पालय, दुःखिते दयाम् कुरु, एतत् सताम् लक्षणम् (अस्ति)।

संस्कृत-व्याख्या—तृष्णाम्—अप्राप्यवस्तुलोभं, छिन्धि—कर्तय, क्षमां—सहिष्णुताम्, भज—सेवस्व, मदं—गर्वं, जहि—त्यज, पापे—दुष्कृते, रतिम्—अनुरागं, मा कृथाः—मा कार्षीः, सत्यं—यथार्थं, ब्रूहि—वद, साधुपदवीं—सन्मार्गम्, अनुयाहि—अनुसर, विद्वज्जनं—पण्डितमण्डलं, सेवस्व—शुश्रूषस्व, मान्यान्—पूज्यान्, मानय—पूजय, विद्विषः अपि—शत्रून् अपि, अनुनय—प्रसादय, प्रश्रयं—विनयं, प्रख्यापय—प्रकटय, कीर्तिं—यशः, पालय—रक्ष, दुःखिते—दुःखभाजि जने, दयां—करुणां, कुरु—विधेहि, एतत्—इदं (सर्वं), सतां—सज्जनानां, लक्षणं—चिह्नम् (अस्ति)।

अनुवाद—लालच छोड़ो, क्षमा करो, घमंड छोड़ो, पाप में मन न लगाओ, सत्य बोलो, सन्त जन जिस मार्ग से चलें उसी से तुम भी चलो, विद्वानों की सेवा करो, पूजनीय लोगों का मान करो, शत्रुओं को भी मिलाये रखो, अपनी नम्रता फैलाओ, अपनी कीर्ति का पालन करो, दुःखियों पर दया दर्शाओ; यही सज्जनों का लोकव्यवहार है।

Curb your aspiration, have forbearance, shake off pride, do not be addicted to sin, speak truly, follow the footsteps of the good, serve the learned, respect the respectable, win over even your enemies, show modesty, preserve fame, be kind to the distressed, this is the characteristic of the gentlemen.

संस्कृत-भावार्थ—यः सज्जनः सः तृष्णां छिनत्ति, क्षमां भजते, गर्वं त्यजति, पापे रतिं न कुरुते, सत्यं वक्ति, सन्मार्गम् अनुसरति, विद्वज्जनं सेवते, पूज्यान्

पूजयति, शत्रूनपि प्रसादयति, विनयं प्रकटयति, यशः पालयति तथा दुःखभाजि जने दयां विधत्ते । इयमेव सज्जनस्य परिभाषा वर्तते ।

टिप्पणी—(१) तृष्णाम्—अनुचित स्पृहा या लोभ । √तृष्+न+टाप् । (२) छिन्धि—काटो । √छिद्+लोट्—सिप् । छिद् धातु रुधादिगणीय और उभयपदी है । इसके रूप—छिनत्ति, छित्तः, छिन्दन्ति । (३) पापे—अत्र विषयाधिकरणे सप्तमी । (४) मा कृथाः—मत करो । √कृ+लुङ् 'माङि लुङ्' इत्यनेन, 'न माङ्योगे' इति सूत्रेण अडागमनिषेधः । (५) साधुपदवीम्—सज्जनों के मार्ग का । साधूनां पदवी (ष० त०), ताम् । (६) विद्वज्जनम्—विद्वानों की । विद्वान् एव जनः (मयूरव्यंसकादित्वात् रूपकरूप स०), तम् । (७) प्रश्रयं प्रख्यापय—विनय प्रकट करो । प्र√श्रि+अच्=प्रश्रयः, तम् । यहाँ 'प्रच्छादय स्वान् गुणान्' पाठभेद मिलता है । अर्थ होगा—'अपने गुणों को छिपाओ । (८) दुःखिते—दुःखी प्राणी पर । दुःखं संजातमस्य इति दुःख+इतच् 'तदस्य संजातं तारकादिभ्य इतच्' इत्यनेन=दुःखितः, तस्मिन् । विषयाधिकरणे सप्तमी । (९) एतत्—अत्र सामान्योपक्रमात् नपुंसकस्य एकशेषः 'शुक्लः पटः, शुक्ला शाटी, शुक्लं वस्त्रम्, तदिदं शुक्लम्' इति वत् ।

इस श्लोक में शार्दूलविक्रीडित छन्द है ।

महापुरुष प्रायः दुर्लभ होते हैं—

**मनसि वचसि काये पुण्यपीयूषपूर्णा-**
**स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।**
**परगुणपरमाणून्पर्वतीकृत्य नित्यं**
**निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥७१॥**

अन्वयः—मनसि वचसि काये पुण्यपीयूषपूर्णाः त्रिभुवनम् उपकारश्रेणिभिः प्रीणयन्तः, परगुणपरमाणून् नित्यम् पर्वतीकृत्य निजहृदि विकसन्तः सन्तः कियन्तः (एव) सन्ति ।

संस्कृत-व्याख्या—मनसि—चित्ते, वचसि—वाण्यां, काये—शरीरे पुण्यपीयूषपूर्णाः—पुण्यं सुकृतम् एव पीयूषम् अमृतम् तेन पूर्णाः सम्पन्नाः, त्रिभुवनं—त्रिलोकीम्, उपकारश्रेणिभिः—हिताचरणपरम्पराभिः, प्रीणयन्तः—सन्तोषयन्तः,

परगुणपरमाणून्—परेषां गुणाः तेषां परमाणून् अल्पगुणानपीत्यर्थः, नित्यं—सततं, पर्वतीकृत्य—शैलानिव महत्तरान् कृत्वा, निजहृदि—स्वकीयेऽन्तःकरणे, विकसन्तः—हर्षानुभवं कुर्वन्तः, सन्तः—सज्जनाः, कियन्तः—कियत्संख्याकाः, सन्ति—विलसन्ति ? अत्यल्पा एव वर्तन्ते इत्यर्थः ।

**अनुवाद**—मन, वचन और शरीर द्वारा पुण्यरूपी अमृत से भरे हुए, अपने उपकारों द्वारा तीनों लोकों को प्रसन्न रखने वाले, दूसरों के परमाणु जैसे छोटे से छोटे गुणों को बढ़ाकर पहाड़ के ऐसा सर्वदा बड़ा दिखलाने वाले तथा अपने मन में सन्तुष्ट रहने वाले सन्त जन संसार में कितने हैं ।

How many good men are there, who. full of the ambrosia of virtues in thought, word and action, and delighting the three worlds with the series of their acts of beneficence, bloom (rejoice) in their heart in ever making mountain of the minutest merits of others.

**संस्कृत-भावार्थ**—मनसा वाचा कर्मणा च सर्वेषामेव प्राणिनामुपकारकारिणः सदा परेषां सूक्ष्मानपि गुणान् विशदीकृत्य हृदि धारयन्तः सज्जनाः जगति अङ्गुलिगणनीया एव भवन्ति ।

**टिप्पणी**—(१) मनसि वचसि काये—अत्र अधिकरणे सप्तमी । (२) पुण्यपीयूषपूर्णाः—पुण्य रूप अमृत से भरे हुए । पुण्यम् एव पीयूषम् (मयूरव्यंसकादित्वात् स०), तेन पूर्णाः (तृ० त०) । (३) त्रिभुवनम—तीनों लोक को । त्रयाणां भुवनानां समाहारः इति त्रिभुवनम् 'तद्धितार्थोत्तरपदसमाहारे च' इत्यनेन (समाहारद्विगु स०) । (४) उपकारश्रेणिभिः—उपकारों की पंक्ति से । उपकाराणां श्रेणयः (ष० त०), ताभिः । (५) परगुणपरमाणून्—दूसरों के परमाणु के समान छोटे से छोटे गुणों को । गुणानां परमाणवः (ष० त०), परेषां गुणपरमाणवः (ष० त०), तान् । कर्मणि द्वितीया । (६) पर्वतीकृत्य—पर्वत के समान बढ़ा-चढ़ाकर । अपर्वतान् पर्वतान् कृत्वा इति पर्वत—च्वि, ईत्व√कृ+क्त्वा—ल्यप् । यहाँ 'ऊर्यादिच्विडाचश्च' सूत्र से गतिसंज्ञा होने पर 'कुगतिप्रादयः' से समास होने के कारण क्त्वा के स्थान में ल्यप् आदेश होता है । (७) सन्तः—सज्जन व्यक्ति । √अस्—लट्—शतृ । यहाँ संज्ञा की तरह प्रयुक्त हुआ है—'विशेषणमात्रप्रयोगः विशेष्यप्रतिपत्तौ' । (८) कियन्तः—कितने । किं परिमाण-

मस्य इति किम्+वतुप्, वस्य घः, घस्य इयादेशः, किमः की आदेशः, 'यस्येति च' इत्यनेन ईकारस्य लोपः ।

इस श्लोक में मालिनी छन्द है । मालिनी का लक्षण 'ननमयययुतेयं मालिनी भोगिलोकैः' ।

# अथ धैर्यपद्धतिः

धीर पुरुष लक्ष्य को बिना प्राप्त किये विश्राम नहीं लेते हैं—

**रत्नैर्महाब्धेस्तुतुषुर्न देवा न भेजिरे भीमविषेण भीतिम् ।**
**सुधां विना न प्रययुर्विरामं न निश्चितार्थाद्विरमन्ति धीराः ॥७२॥**

अन्वयः—देवाः महाब्धेः रत्नैः न तुतुषुः, भीमविषेण भीतिम् न भेजिरे, सुधाम् विना विरामम् न प्रययुः, धीराः निश्चितार्थात् न विरमन्ति ।

संस्कृत-व्याख्या—देवाः—सुराः, महाब्धेः—क्षीरसागरस्य, रत्नैः—कौस्तुभादिमणिभिः, न तुतुषुः—न सन्तोषं प्रापुः, भीमविषेण—भयङ्करगरलेन, भीतिं—भयं, न भेजिरे—न प्रापुः, सुधां—पीयूषं, विना—ऋते, विरामं—(स्वकार्याद्) विरतिं, न प्रययुः—न गताः । धीराः—मनस्विनः, निश्चितार्थात्—निश्चितः प्रतिज्ञातः यः अर्थः लक्ष्यं तस्मात्, न विरमन्ति—न विश्रामं प्राप्नुवन्ति ।

अनुवाद—समुद्र के रत्नों को मथकर निकाल कर देवता लोग संतुष्ट न रहे, भयानक हलाहल को पाकर भी डर कर बैठ न गये, अमृत को पाये बिना वे लोग विश्रान्त न हुए—उन्हें चैन न मिला । धीर पुरुष अपने निश्चित उद्देश्य को पूरा किये बिना कभी नहीं रहते, बिना पूरा किये नहीं रुकते ।

Gods were not satisfied with the gems of the ocean: nor were they terrified with (its) deadly poison, they did not take rest until they obtained ambrosia. Firm minded people do not swerve (or desist) from their fixed purpose.

संस्कृत-भावार्थ—देवाः सुधालब्धये सागरं ममन्थुः, तत्र मध्य एव महार्हाणि रत्नानि आविर्बभूवुर्भयंकरं गरलं च; किन्तु देवाः यावत्सुधां न लेभिरे तावन्न रत्नैस्तुतुषुर्नच गरलेन बिभ्युः । धीराणां स्वभावोऽयं यत्ते आफलोदयात् प्रयतन्ते एव, न फलोत्पत्तिं यावद् विश्रामं लभन्ते ।

**टिप्पणी**—(१) **देवाः**—देवता लोग। दिव्यन्ति इति देवाः√दिव्+अच् पचादित्वात्। (२) **महाब्धेः**—महासमुद्र, क्षीरसागर के। आपः धीयन्ते अस्मिन् इति अब्धिः अप्√धा+कि 'कर्मण्यधिकरणे च' इत्यनेन। महान् अब्धिः महाब्धिः (कर्म० स०), तस्य। (३) **रत्नैः**—(कौस्तुभ आदि चौदह) रत्नों से। यहाँ रत्न का तात्पर्य कौस्तुभमणि तथा उच्चैःश्रवा, ऐरावत, कल्पवृक्ष आदि श्रेष्ठ-जातीय वस्तुओं से भी है। 'रत्नं स्वजातिश्रेष्ठेऽपि मणावपि नपुंसकम्' इति मेदिनी। 'जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते'। (४) **भीमविषेण**—भयंकर विष, कालकूट विष से। भीमं विषम् (कर्म० स०), तेन। हेतौ तृतीया। यहाँ 'भीत्रार्थानां भयहेतुः' सूत्र से पञ्चमी होनी चाहिए, किन्तु हेतुत्वमात्र की विवक्षा में तृतीया ही हुई। (५) **सुधाम्**—अमृत के (विना)। अत्र 'पृथग्-विनानानाभिस्तृतीयान्यतरस्याम्' इति सूत्रेण विनायोगे द्वितीया।(६) **विरामं न प्रययुः**—विरत नहीं हुए। वि√रम्+घञ=विराम। प्र√या+लिट्—उस्=प्रययुः। (७) **निश्चितार्थात्**—निश्चित प्रयोजन से। निश्चितः अर्थः (कर्म० स०), तस्मात्। अत्र 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इति वार्तिकेन पञ्चमी। (८)**न विरमन्ति**—विरत नहीं होते हैं। √रम् धातु आत्मनेपदी है, किन्तु वि आङ तथा परि उपसर्ग के साथ यह परस्मैपदी हो जाती है। इसका नियामक सूत्र है—'व्याङ्परिभ्यो रमः'।

इस श्लोक में अर्थान्तरन्यास अलंकार है और उपजाति छन्द है।

**विशेष**—समुद्र-मन्थन से जो चौदह प्रकार के रत्न निकले थे, वे ये हैं—'लक्ष्मीः कौस्तुभपारिजातकसुरा धन्वन्तरिश्चन्द्रमा, गावः कामदुधाः सुरेश्वरगजो रम्भादिदेवाङ्गनाः। अश्वः सप्तमुखो विषं हरिधनुः शङ्खोऽमृतं चाम्बुधे, रत्नानीह चतुर्दश प्रतिदिनं कुर्वन्तु नो मङ्गलम्॥'

अधम-मध्यम और उत्तम का अन्तर—

**प्रारभ्यते न खलु विघ्नभयेन नीचैः**
**प्रारभ्य विघ्ननिहता विरमन्ति मध्याः।**
**विघ्नैर्मुहुर्मुहुरपि प्रतिहन्यमानाः**
**प्रारब्धमुत्तमजना न परित्यजन्ति ॥७३॥**

अन्वयः—नीचैः विघ्नभयेन न प्रारभ्यते खलु, मध्याः प्रारभ्य विघ्ननिहताः विरमन्ति, उत्तमजनाः विघ्नैः मुहुः मुहुः प्रतिहन्यमानाः अपि प्रारब्धम् (कर्म) न परित्यजन्ति ।

संस्कृत-व्याख्या—नीचैः—अधमैः (जनैः), विघ्नभयेन—विघ्नेभ्यः अन्तरायेभ्यः यत् भयं तेन हेतुना, न प्रारभ्यते—कार्यारम्भो न विधीयते, खलु—निश्चयेन । मध्याः—मध्यमाः (जनाः), प्रारभ्य—कार्यमुपक्रम्य, विघ्ननिहताः—विघ्नैः प्रत्यूहैः निहताः प्रतिहताः (सन्तः), विरमन्ति—विरताः भवन्ति । उत्तमजनाः—उत्कृष्टाः लोकाः, विघ्नैः—अन्तरायैः, मुहुः मुहुः—वारं वारं, प्रतिहन्यमानाः—समाक्रान्ताः, अपि, प्रारब्धम्—उपक्रान्तं (कर्म), न परित्यजन्ति—न विसृजन्ति ।

अनुवाद—विघ्न के भय से नीच पुरुष कार्य में हाथ ही नहीं लगाते, मध्यम वर्ग के लोग कार्य आरम्भ करने के बाद विघ्न आ जाने पर झटपट काम से हाथ खींच लेते हैं, परन्तु उत्तम वर्ग के मनुष्य विघ्नों के बार-बार आघात करने पर भी अपने शुरू किये काम को नहीं छोड़ते (समाप्त ही कर दिखाते हैं चाहे विघ्न-बाधायें क्यों न आ पड़ें) ।

For fear of obstacles, the low class people begin nothing at all. The middle class people begin but desist when obstructed by obstacles, while the first class people, though repelled repeatedly by obstructions, do not give up what they have (once) begun.

संस्कृत-भावार्थ—उत्तमप्रकृतिर्मनस्वी जनः यत् कार्यं प्रारभते तत् विघ्नान-विगणय्य समाप्तिमेव नयति, मध्यमश्च कार्यारम्भं करोति किन्तु विघ्नैर्भग्नोद्यमः सन् मध्य एव कार्यं जहाति, अधमस्तु विघ्नाः भविष्यन्तीति शङ्कया कार्यारम्भमेव न करोति—इति त्रयो भेदा नराणाम् ।

टिप्पणी—(१) नीचैः—नीच (अधम प्रकृति वाले) जनों द्वारा । अनुक्ते कर्तरि तृतीया । (२) विघ्नभयेन—विघ्नों के भय से वि√हन्+क 'मूलविभुजादिभ्यः कः' इत्यनेन=विघ्नः । √भी+अच्=भयम् । विघ्नेभ्यः भयम् (पं० त०) । (३) मध्याः—बीच के (जो न उत्तम है न अधम वे) लोग । 'नीचैः' और 'मध्याः' ये दोनों विशेषण यहाँ विशेष्य रूप में प्रयुक्त हैं । 'विशेषणमात्रप्रयोगः विशेष्यप्रतिपत्तौ' इति वामनः (४) उत्तमजनाः—श्रेष्ठ व्यक्ति । उत्तमाः

जनाः (कर्म० स०)। उद्+तमप् 'अतिशायने तमविष्ठनौ' इत्यनेन। (५) प्रतिहन्यमानाः—पीडित होने पर भी। प्रति√हन्+लट् कर्मणि—शानच्, यक्। (६) प्रारब्धम्—प्रारंभ किये हुए कार्य को। प्र—आ√रम्+क्त कर्मणि। यह अनुक्त 'कार्यम्' का विशेषण है। यहाँ 'मुहुर्मुहुरपि' की जगह 'पुनः पुनरपि' तथा 'उत्तमजनाः' के बदले 'उत्तमगुणाः' पाठभेद मिलते हैं।

इस श्लोक में उपमा, व्यतिरेक तथा अप्रस्तुतप्रशंसा अलंकार हैं और वसन्ततिलका छन्द है।

विशेष—यह श्लोक मुद्राराक्षस के द्वितीय अंक में आया है।

मनस्वी व्यक्ति कार्य-सिद्धि के लिए सुख-दुःख नहीं गिनते—

**क्वचित्पृथ्वीशय्यः क्वचिदपि च पर्यङ्कशयनः**
**क्वचिच्छाकाहारः क्वचिदपि च शाल्योदनरुचिः।**
**क्वचित्कन्थाधारी क्वचिदपि च दिव्याम्बरधरो**
**मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥७४॥**

अन्वयः—कार्यार्थी मनस्वी न दुःखम्, न सुखम् गणयति।

संस्कृत-व्याख्या—क्वचित्—कुत्रचित्, पृथ्वीशय्यः—पृथ्वी शय्या यस्य तादृशः, क्वचिदपि च, पर्यङ्कशयनः—पर्यङ्के महार्हशय्यायां शयनं निद्रा यस्य तादृशः क्वचित्, शाकाहारः—शाकमात्रभोजी, क्वचिदपि च, शाल्योदनरुचिः—तण्डुलभक्तप्रियः, क्वचित्, कन्थाधारी—शीर्णजीर्णवस्त्रधारी, क्वचिदपि च, दिव्याम्बरधरः—चीनांशुकधारी, कार्यार्थी—कार्यसाधनाभिलाषी, मनस्वी—धीरः, न दुःखं—न क्लेशं, न सुखं—न आनन्दं, गणयति—अपेक्षते।

अनुवाद—कभी पृथ्वी पर सोते, कभी पलँग पर, कभी साग खाकर दिन काटते, कभी बढ़िया चावल का भात खाकर, कभी फटा-पुराना चिथड़ा पहनते और कभी बढ़िया रेशमी वस्त्र। यों अपना काम पूरा करने वाले मनस्वी लोग सुख-दुःख की परवाह नहीं करते।

Sometimes sleeping on ground and sometimes on a couch; sometimes living on (simple) vegetables and sometimes tasting rice of Sali paddy, sometimes wearing rags and sometimes sup-

erfine clothes, a high-minded man, seeking to Serve his purpose does not care for Comforts or Sufferings.

**संस्कृत-भावार्थ**—कार्यसाधनविधौ दृढेन मनसा प्रवृत्तः पुरुषः सुखं दुःखं वा न पश्यति। स तु कार्यसिद्धये देशकालानुसारं कण्टकाकीर्णायां भुवि स्वपिति महार्हे पर्यङ्केऽपि, सरसं नीरसं वा वस्तु भुनक्ति, जीर्णं बहुमूल्यं वा वस्त्रं परिदधाति। इत्थं धीरः सुखदुःखयोः समानावस्थया एव कार्यसाधनपरो भवति।

**टिप्पणी**—(१) **क्वचित्**—कहीं या किसी समय। (२) **पृथ्वीशय्यः**—पृथ्वी ही जिसकी शय्या है, भूमि पर सोने वाला। शय्यते अस्याम् इति शय्या √शी+क्यप्+टाप्। पृथ्वी एव शय्या यस्य सः (ब० स०)। (३) **पर्यङ्क-शयनः**—पलंग पर सोने वाला। √शी+ल्युट्=शयनम्। पर्यङ्के शयनं यस्य सः (ब० स०)। (४) **शाकाहारः**—शाक खाने वाला, शाक ही भोजन करता है। आ√हृ+घञ् भावे=आहारः। शाकः आहारो यस्य सः (ब० स०)। (५) **शाल्योदनरुचिः**—चावल का भात खाने वाला अर्थात् स्वादिष्ठान्नभोजी। शाल्याः ओदनः (ष० त०), शाल्योदने रुचिः यस्य सः (ब० स०)। (६) **कन्थाधारी**—गुदड़ी धारण करने वाला। कन्थाः धारयति इति कन्था√धृ+णिनि कर्तरि (उपपद स०)। (७) **दिव्याम्बरधरः**—दिव्य (बहुमूल्य) वस्त्र पहनने वाला। दिवि भवम् दिव्यम् दिव्+यत्। धरतीति धरः√धृ+अच् पचादित्वात्। दिव्यम् अम्बरम् (कर्म० स०), तस्य धरः (ष० त०)। (८) **कार्यार्थी**—कार्य-सिद्धि चाहने वाला। कार्यम् अर्थयते इति कार्य√अर्थ+णिनि कर्तरि, उपपद स०। अर्थः अभिलाषः तद्वान् इति अर्थ+इनि अस्त्यर्थे=अर्थी=अभिलाषवान्। कार्येण अर्थी इति कार्यार्थी (सुप्सुपा स०)। यहाँ 'कृद्वृत्तेः तद्धितवृत्तिः बलीयसी' इस महाभाष्य के प्रमाण से दूसरी व्युत्पत्ति अधिक समीचीन है।

इस श्लोक में शिखरिणी छन्द है।

धीर पुरुष न्याय-मार्ग से विचलित नहीं होते—

> निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
> लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम्।
> अद्यैव वा मरणमस्तु युगान्तरे वा
> न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥८१॥

अन्वयः—नीतिनिपुणाः निन्दन्तु यदि वा, स्तुवन्तु । लक्ष्मीः समाविशतु, वा, यथेष्टम् गच्छतु अद्य एव मरणम् अस्तु वा युगान्तरे अस्तु, धीराः न्याय्यात् पथः पदम् न प्रविचलन्ति ।

संस्कृत-व्याख्या—नीतिनिपुणाः—नयविशारदाः, निन्दन्तु—दूषयन्तु, यदि वा-अथवा, स्तुवन्तु—प्रशंसन्तु, लक्ष्मीः—श्रीः, समाविशतु—आगच्छतु, वा—उत, यथेष्टं—यथेच्छं, गच्छतु—अपसरतु, अद्य एव—अस्मिन् एव दिने, मरणं—मृत्युः, अस्तु, वा—उत, युगान्तरे—कल्पान्तरे (अस्तु), धीराः—धैर्यशालिनः, न्याय्यात्—न्याययुक्तात्, पथः—मार्गात्, पद—पदविन्यासमात्रम् न प्रविचलन्ति—न त्रस्यन्ति ।

अनुवाद—नीतिज्ञ लोग निन्दा करें या प्रशंसा; लक्ष्मी इच्छानुसार आये या चली जाय, आज ही मरण हो या युगों के बाद—परन्तु वीर पुरुष न्याय के मार्ग से कभी विचलित नहीं होते ।

The firm minded people do not swerve even a step from the just path, whether men well versed in the conduct of life's affairs may praise or blame, whether goddess of fortune may come in or go away at her sweet will or whether death may occur just to-day or after an age.

संस्कृत-भावार्थ—मनस्विजनाः केनचित् कृताया निन्दायाः स्तुतेर्वा अपेक्षां न कुर्वन्ति, लक्ष्मीर्लभ्यते वा न लभ्यते इत्यपि नापेक्षन्ते, मृत्युमप्युपेक्षन्ते; किन्तु कदापि न्यायोचितात्मार्गात् पराङ्मुखा न भवन्ति तदेव कुर्वन्ति यन्न्यायोचितं भवति ।

टिप्पणी—(१) नीतिनिपुणाः—नीति में पारंगत । नीतौ निपुणाः (स० त०) । (२) लक्ष्मीः—संपत्ति । लक्षयति इति लक्ष्मीः √लक्ष्+ई, मुट् आगम 'लक्षेर्मुट् च' इत्यनेन । (३) यथेष्टम्—इच्छानुसार । √इष्+क्त भावे=इष्टम् । इष्टम् अनतिक्रम्य वर्तते इति यथेष्टम् (अव्य० स०) । (४) युगान्तरे—दूसरे युग में । अन्यः युगः युगान्तरम् (मयूरव्यंसकादित्वात् नित्यसमासः), तस्मिन् । (५) धीरः—मनस्वी व्यक्ति । धियं बुद्धिम् ईरयन्ति सर्वतः प्रवर्तयन्ति इति धी √ईर्+अच् । (६) न्याय्यात्—न्याययुक्त, समीचीन । न्यायात् अनपेतः न्याय्यः न्याय+यत् 'धर्मपथ्यर्थन्यायादनपेते' इत्यनेन । नि√अय्+घञ् भावे=न्यायः ।

(७) पदम्—पग भर भी । अत्र 'अत्यन्तसंयोगे द्वितीया' 'कालाध्वनोरत्यन्तसंयोगे' इत्यनेन ।

इस श्लोक में वसन्ततिलका छन्द है ।

धीर पुरुष की महिमा—

कान्ताकटाक्षविशिखा न लुनन्ति यस्य
चित्तं न निर्दहति कोपकृशानुतापः ।
कर्षन्ति भूरि विषयाश्च न लोभपाशै-
र्लोकत्रयं जयति कृत्स्नमिदं स धीरः ॥७६॥

अन्वयः—यस्य चित्तम् कान्ताकटाक्षविशिखाः न लुनन्ति, कोपकृशानुतापः न दहति, भूरिविषयाः लोभपाशैः च न कर्षन्ति, स धीरः कृत्स्नम् इदम् लोकत्रयम् जयति ।

संस्कृत-व्याख्या—यस्य—धीरस्य, चित्तं—चेतः, कान्ताकटाक्षविशिखाः—कान्तायाः सुन्दर्याः कटाक्षाः अपाङ्गवीक्षितानि त एव विशिखाः बाणाः, न लुनन्ति—न छिन्दन्ति न संमोहयन्तीति यावत्, कोपकृशानुतापः—कोपः क्रोधः एव कृशानुः अग्निः तस्य तापः उष्णता, न दहति—न भस्मसात्करोति, भूरिविषयाः—भूरयः बहुलाः विषयाः इन्द्रियार्थाः, लोभपाशैः—लोभाः एव पाशाः वागुराः तैः, च, न कर्षन्ति—न आकर्षन्ति स्वायत्तीकुर्वन्तीति यावत्, सः—तादृशः, धीरः—धैर्यशाली जनः, कृत्स्नम्—अखिलम्, लोकत्रयं—भुवनत्रयं, जयति—आत्माधीनं करोति ।

अनुवाद—जिसके मन को सुन्दरी रमणी का कटाक्ष रूपी शर नहीं वेध सकता, और क्रोध रूपी अग्नि का ताप नहीं जला सकता तथा विविध प्रकार की सांसारिक विषय-वासनायें अपने लोभपाशों द्वारा आकृष्ट नहीं कर सकती, वही धीर पुरुष इस सम्पूर्ण त्रिभुवन को जीतता है ।

That equanimous minded man conquers the triple world, whose mind, the arrows of side long glances of lovely woman do not pierce, the heat of the fire of anger does not burn and the numerous sensual objects do not attract with their snares of temptations.

संस्कृत-भावार्थ—यस्य चित्तं कामस्य क्रोधस्य लोभस्य च वशीभूतं न भवति स एव धीरः जगद्विजयी अर्थात् तस्य न किञ्चिदपि असाध्यम् ।

टिप्पणी—(१) कान्ताकटाक्षविशिखाः—कामिनी के कटाक्ष रूपी बाण। कान्तायाः कटाक्षाः (ष० त०), त एव विशिखाः इति कान्ताकटाक्षविशिखाः (मयूरव्यंसकादित्वात् रूपकरूप स०) । (२) कोपकृशानुतापः—क्रोध रूपी अग्नि का दाह। कोपः एव कृशानुः (मयू० रूपकरूप स०), तस्य तापः (ष० त०)। (३) भूरिविषयः—बहुत-से उपभोग के पदार्थ। भूरयः विषयाः (कर्म० स०)। (४) लोभपाशैः—लोभ रूप जालों से। लोभाः एव पाशाः (मयू० रूपकरूप स०), तैः। करणे तृतीया । (५) कृत्स्नम्—सम्पूर्ण । (६) लोकत्रयम्—तीनों लोक को। त्रि+तयप् तस्य अयजादेशः=त्रयम् । लोकानां त्रयम् लोकत्रयम् (ष० त०)।

इस श्लोक में 'कर्षन्ति' की जगह 'तर्पन्ति' तथा 'लोभपाशैः' के स्थान में 'लोभपाशाः' पाठभेद मिलते हैं। इसमें वसन्ततिलका छन्द है ।

कदर्थितस्यापि हि धैर्यवृत्ते-
र्न शक्यते धैर्यगुणः प्रमार्ष्टुम् ।
अधोमुखस्यापि कृतस्य वह्ने-
र्नाधः शिखा यान्ति कदाचिदेव ॥७७॥

अन्वयः—कदर्थितस्य अपि धैर्यवृत्तेः (जनस्य) धैर्यगुणः प्रमार्ष्टुम् न शक्यते हि। अधोमुखस्य कृतस्य अपि वह्नेः शिखाः कदाचित् एव अधः न यान्ति ।

संस्कृत-व्याख्या—कदर्थितस्य अपि—क्लेशितस्य अपि, धैर्यवृत्तेः—धीराचारस्य (जनस्य), धैर्यगुणः—धृतिनामविशेषगुणः, प्रमार्ष्टुं—निराकर्तुं, न शक्यते—न पार्यते, हि नूनम् । (अत्र दृष्टान्तः दीयते—) अधोमुखस्य कृतस्य—अवाङ्मुखीकृतस्य, अपि, वह्नेः—अग्नेः, शिखाः—ज्वालाः, कदाचित् एव—कस्मिंश्चिदपि काले, अधः—नीचैः, न यान्ति—न गच्छन्ति ।

अनुवाद—धीर पुरुष का धैर्यगुण मिटाया नहीं जा सकता, चाहे वह कितना क्लेशापन्न क्यों न हो । उलट देने पर भी अग्नि की शिखा नीचे की ओर कभी नहीं जाती, उसकी ज्वाला ऊपर को ही भागती है ।

संस्कृत-व्याख्या—अयम्—एषः, कायः—शरीरं, गुरुशिखरिणः—गुरुः उन्नतः यः शिखरी पर्वतः तस्य, शृङ्गोत्सङ्गात्—शिखरोपरिभागात्, क्वापि—कस्मिंश्चित्, विषमे—विकटे, कठिनदृषदन्ते—कर्कशपाषाणोपरि, पतित्वा, विगलितः—चूर्णितः (चेत्), वरम्—ईषत्प्रियम्, हस्तः—करः, तीक्ष्णदशने—उग्रदंष्ट्रापूर्णे, फणिपतिमुखे—सर्पाधिराजवक्त्रे, न्यस्तः—निहितः (चेत्), वरम्—मनाक् प्रियम्, वह्नौ—अग्नौ, पातः—पतनं, वरम्, तदपि—किन्तु, शीलविलयः—चरित्रभ्रंशः, कृतः—विहितः (सन्) न—नहि (वरम्)।

अनुवाद—ऊंचे पहाड़ के शिखर पर से अपने को नीचे किसी कठिन पथरीली जमीन पर गिराकर जान दे देना कहीं अच्छा है, बड़े विषैले सांप के तीखे दांतों के बीच हाथ डाल देना कहीं अच्छा है, जलती हुई धधकती आग में कूद पड़ना कहीं अच्छा है—परन्तु शीलभ्रष्ट होना—चरित्रहीन होना किसी हालत में अच्छा नहीं।

Better is this body falling from the top of a peak of a mountain on rugged part of a hard rock, be crushed to pieces; better that the hand be thrust into the sharp fanged mouth of a deadly serpent; better to fall into fire, still it is not better to wreck (*i. e.* lose) one's character.

संस्कृत-भावार्थ—पर्वतात् पतित्वा उग्रदंष्ट्रापूर्णे सर्पमुखे हस्तं निधाय अग्नौ आत्मानं प्रक्षिप्य मरणं वरं किन्तु चरित्रभ्रंशो न वरम्। यतो हि शीलं मानवस्य सर्वोत्तमं धनमस्ति, अतः तस्य रक्षां प्राणान् परित्यज्यापि कुर्यादेव।

टिप्पणी—(१) गुरुशिखरिणः—ऊंचे पर्वत के। शिखर+इनि=शिखरी। गुरुः शिखरी (कर्म० स०) तस्य। सम्बन्धे षष्ठी। (२) शृङ्गोत्सङ्गात्—शिखर के ऊपरी हिस्से से। शृङ्गस्य उत्सङ्गः (ष० त०), तस्मात्। अपादाने पञ्चमी। (३) कठिनदृषदन्ते—कठोर पत्थर की नोक पर। कठिना दृषत् (कर्म० स०), तस्याः अन्तः (ष० त०), तस्मिन्। अधिकरणे सप्तमी। (४) तीक्ष्णदशने—तीखे दांतों वाले। दश्यते अनेन इति दशनम् √दंश्+ल्युट् करणे अथवा दशतीति दशनः √दंश्+ल्यु नन्द्यादित्वात्। तीक्ष्णाः दशनाः यस्मिन् तत् तीक्ष्णदशनम् (ब० स०), तस्मिन्। यह 'फणिपतिमुखे' का विशेषण है। (५) फणिपतिमुखे—सांप के मुंह मे। फणिनां पतिः, तस्य मुखम् (ष० त०), तस्मिन्। अधि-

करणे सप्तमी। (६) शीलविलयः—सदाचरण का नाश होना, चरित्रहीन होना। शीलस्य विलयः (ष० त०)। तात्पर्य यह है कि शील की रक्षा हर प्रकार से करनी चाहिए। अन्यत्र भी कहा है—'वृत्तं यत्नेन संरक्षेद् वित्तमायाति याति च। अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः।' (७) वरम्—किञ्चित् प्रिय। 'दैवाद्वृते वरः श्रेष्ठे त्रिषु क्लीवं मनाक्प्रिये' इत्यमरः।

इस श्लोक में शिखरिणी छन्द है।

शील की महिमा—

**वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणा-**
**न्मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते।**
**व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते**
**यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥७६॥**

अन्वयः—यस्य अङ्गे अखिललोकवल्लभतमम् शीलम् समुन्मीलति तस्य वह्निः जलायते, जलनिधिः कुल्यायते तत्क्षणात् मेरुः स्वल्पशिलायते, मृगपतिः सद्यः कुरङ्गायते, व्यालः माल्यगुणायते, विषरसः पीयूषवर्षायते।

संस्कृत-व्याख्या—यस्य—मनुष्यस्य, अङ्गे—शरीरे, अखिललोकवल्लभतमम्—अखिललोकानां समस्तजनानां वल्लभतमं प्रियतमं, शीलं—सद्वृत्तं, समुन्मीलति—समुल्लसति, तस्य—जनस्य, वह्निः—अग्निः, जलायते—जलमिव आचरति, जलनिधिः—समुद्रः, कुल्यायते—कुल्या इव अल्पनदी इव आचरति, तत्क्षणात्—तस्मिन्नेव क्षणे, मेरुः—सुमेरुपर्वतः, स्वल्पशिलायते—अल्पदृषत् इव आचरति, मृगपतिः—सिंहः, सद्यः—सत्वरं, कुरङ्गायते—हरिणः इव आचरति, व्यालः—सर्पः, माल्यगुणायते—माल्यगुण इव स्रक्तन्तुरिव आचरति, विषरसः—गरलद्रवः, पीयूषवर्षायते—पीयूषवर्षः अमृतवृष्टिः इव आचरति।

अनुवाद—जिस मनुष्य के शरीर में सारे संसार की प्यारी वस्तु शील है उसके लिये आग पानी हो जाती, समुद्र नहर हो जाता, मेरु पहाड़ तत्काल ही छोटी शिला हो जाता, सिंह तुरंत ही हरिण हो जाता, सर्प पुष्पमाला हो जाता और उसके लिये विष अमृत हो जाता है।

Fire acts like water, the ocean becomes a canal, the Meru mountain becomes at once a small slab of stone, the lion beh-

aves immediately like a deer, the serpent like a string of garland and the poisonous juice becomes a shower of nectar to that man in whose body flourishes good character, the most prized thing in the entire world.

**संस्कृत-भावार्थ**—सर्वजनप्रियं शीलं यस्य वर्तते तस्य सर्वे दुःखहेतवः सुखहेतवः भवन्ति। यतो हि शीलेन स परेषां गुणं स्वरूपं च स्वानुकूलं कर्तुं शक्नोति। अतएव सच्छीलः वह्नि जलमिव ग्रहीतुं, समुद्रं क्षुद्र सरितमिव तर्तुं, मेरुं लघुपाषाणमिव लङ्घयितु, सिहं मृगमिव कातरं कर्तुं, सर्प च मालामिव धारयितु विषं चामृतमिव पातुं स प्रभवति।

**टिप्पणी**—(१) **अखिललोकवल्लभतमम्**—सारे संसार को अत्यंत प्रिय। अखिलाः लोकाः (कर्म० स०), तेषां वल्लभतमम् (ष० त०)। वल्लभ+तमप्। (२) **तस्य**—उसके लिए। यहां तादर्थ्य षष्ठी है। जैसे 'अश्वस्य घासः अश्वघासः—अश्व के लिए घास; धर्मस्य पत्नी धर्मपत्नी—धर्म के लिए पत्नी' में तादर्थ्य षष्ठी होती है उसी तरह यहां भी हुई। (३) **जलायते**—जल जैसा (शीतल) हो जाना है। जलम् इव आचरति इति जलायते जल+क्यङ 'कर्तुः क्यङ सलोपश्च' इत्यनेन, ततः 'अकृत्सार्वधातुकयोः—'इति सूत्रेण दीर्घः, लट्—ते (४) **कुल्यायते**—नहर की तरह (सुलंघ्य) हो जाता है। कुल्या इव आचरति इति कुल्या+क्यङ+लट्—ते। (५) **स्वल्पशिलायते**—छोटे पत्थर जैसा हो जाता है। स्वल्पा शिला (कर्म० स०), स्वल्पशिला+क्यङ+लट्—ते। (६) **कुरङ्गायते**—मृग जैसा हो जाता है। कुरङ्ग+क्यङ+लट्—ते। (७) **माल्यगुणायते**—माला के धागे जैसा हो जाता है। माल्यस्य गुणः (ष० त०), माल्यगुण इव आचरति इति माल्यगुण क्यङ+लट्—ते। (८) **पीयूषवर्षायते**—अमृत की वर्षा जैसा हो जाता है। पीयूषस्य वर्षाः (ष० त०), पीयूषवर्षा इव आचरति इति पीयूषवर्षा+क्यङ+लट्—ते।

इस श्लोक में क्रव्यर्थ से औपम्य की प्रतीति होने के कारण उपमा अलंकार का भेद है और शार्दूलविक्रीडित छन्द है।

दुःख के बाद सुख अवश्य मिलता है—

**छिन्नोऽपि रोहति तरुः क्षीणोऽप्युपचीयते पुनश्चन्द्रः।**
**इति विमृशन्तः सन्तः संतप्यन्ते न विप्लुता लोके ॥८०॥**

अन्वयः—तरुः छिन्नः (सन्) अपि पुनः रोहति; चन्द्रः क्षीणः अपि पुनः उपचीयते इति विमृशन्तः सन्तः लोके विप्लुताः अपि न संतप्यन्ते।

संस्कृत-व्याख्या—तरुः—वृक्षः, छिन्नः—कृत्तः (सन्) अपि, पुनः—भूयः, रोहति—उद्गच्छति, चन्द्रः—इन्दुः, क्षीणः—कृशः, अपि, पुनः, उपचीयते—प्रवर्धते, इति—एवं, विमृशन्तः—मनसि चिन्तयन्तः, सन्तः—सत्पुरुषाः, लोके—संसारे, विप्लुताः—आपदाभिभूताः, अपि, न सन्तप्यन्ते—न दुःखिता भवन्ति।

अनुवाद—काटने पर भी वृक्ष बढ़ता है, क्षीण होने पर भी चन्द्रमा फिर बढ़ जाता है, यह सोच कर संत लोग संसार में दुःखपीड़ित होने पर भी दुःखित नहीं होते।

A tree, though cut down, grows again; the moon, though waned waxes again: thus reflecting, the good are not afflicted in this world though plunged in miseries.

संस्कृत-भावार्थ—छिन्नस्य वृक्षस्य पुनरङ्कुरणमिव कलाक्षीणस्य चन्द्रस्य पुनरुपचय इव दुःखानन्तरं सुखं सर्वैर्लभ्यमेवेति विचार्य सज्जनाः विपत्स्वपि दुःखं नानुभवन्ति।

टिप्पणी—(१) तरु—वृक्ष। तरति समुद्रादिकम् अनेन इति√तॄ+उ। (२) छिन्नः—कटा हुआ। √छिद्+क्त कर्मणि। (३) क्षीणः—(कलाओं से) क्षीण हुआ। √क्षि+क्त, 'निष्ठायामण्यदर्थे' इत्यनेन दीर्घः, 'क्षियो-दीर्घात्' इत्यनेन तस्य नः। (४) उपचीयते—बढ़ता है। उप√चि+लट्—ते कर्मणि, यक्। 'अपचीयते' का अर्थ है—घटता है। (५) सन्तप्यन्ते—संतप्त होते हैं। सम्√तप्+लट्—अन्ते कर्मणि अथवा कर्मकर्तरि, यक्। (६) विप्लुताः—विपत्तिग्रस्त या दुःखाभिभूत। वि√प्लु+क्त। 'विप्लुता लोके' के स्थान पर 'न लोकेषु' पाठभेद मिलता है।

इस श्लोक में आर्या छन्द है।

शील ही सर्वोत्कृष्ट भूषण है—

**ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो**
**ज्ञानस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः।**

**अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता**
**सर्वेषामपि सर्वकारणमिदं शीलं परं भूषणम् ॥८१॥**

अन्वयः—ऐश्वर्यस्य सुजनता विभूषणम्, शौर्यस्य वाक्संयमः, ज्ञानस्य उपशमः, श्रुतस्य विनयः, वित्तस्य पात्रे व्ययः, तपसः अक्रोधः, प्रभवितुः क्षमा, धर्मस्य निर्व्याजता, सर्वकारणम् इदम् शीलम् सर्वेषाम् अपि परम् भूषणम् (अस्ति)।

संस्कृत-व्याख्या—ऐश्वर्यस्य—स्वामित्वस्य, सुजनता—सौजन्यं, विभूषणं—मण्डनम्, शौर्यस्य—वीरतायाः, वाक्संयमः—वाचो दमनम् (विभूषणम्), ज्ञानस्य—आत्मज्ञानस्य, उपशमः—चित्तशान्तिः (विभूषणम्), श्रुतस्य—वेदादिश्रवणस्य, विनयः—नम्रता (विभूषणम्), वित्तस्य—धनस्य, पात्रे—सत्पात्रे, व्ययः—दानं (विभूषणम्), तपसः—तपस्यायाः, अक्रोधः क्रोधशून्यत्वं (विभूषणम्), प्रभवितुः—निग्रहानुग्रहसमर्थस्य, क्षमा—सहिष्णुता (विभूषणम्), धर्मस्य—श्रुतिस्मृतिप्रतिपादितपवित्रकर्तव्यस्य, निर्व्याजता—आडम्बरशून्यता (विभूषणम्), सर्वकारणं—सकलमूलम्, इदम्—एतत्, शीलं—सच्चरित्रं, सर्वेषाम् अपि—सकललोकानामपि, परम्—उत्कृष्टं, भूषणम्—अलङ्कारः (अस्ति)।

अनुवाद—ऐश्वर्य का विभूषण सुजनता, शूरता का वचनसंयम, ज्ञान का शान्ति, शास्त्र पढ़ने का विनय, धन का सत्पात्र में दान करना, तपस्या का क्रोध नहीं करना, प्रभुता का क्षमा और धर्म का भूषण है निश्छलता—यह शील बड़ा भारी भूषण है, यह सब की जड़ है।

Gentlemanliness is the ornament of power, restraint over speech, that of bravery: quietitude is (the ornament) of self-knowledge, modesty that of Vedic knowledge; spending over worthy recipient is (the ornament) of wealth; non-anger, that of penance forgiveness is (the ornament) of great majesty and freedom from hypocrisy, that of piety; while this good character, the root of all these, is the greatest ornament of all.

संस्कृत-भावार्थ—ऐश्वर्यं सौजन्येन, शूरत्वं वाक्संयमेन, ज्ञानं चित्तशान्त्या, शास्त्राध्ययनं विनयेन, धनं सत्पात्रेषु वितरणेन, तपः अक्रोधेन, प्रभुत्वं क्षमया, धर्मश्च निश्छलतया शोभते। परन्तु एतेषामपि मूलकारणं शीलं सकललोकानामपि उत्कृष्टं भूषणम् अस्ति

टिप्पणी—(१) ऐश्वर्यस्य—विभूति का। √ईश्+वरच् 'स्थेशभासपिस-कसो वरच्' इत्यनेन। ईश्वरस्य भावः ऐश्वर्यम् ईश्वर+ष्यञ्। (२) **विभूषणम्**—अलंकार। विभूष्यते अनेन इति विभूषणम् वि√भूष्+ल्युट् करणे। (३) **शौर्यस्य**—वीरता का। शूरस्य भावः शौर्यम् शूर+ष्यञ्। (४) **वाक्संयमः**—वाणी पर संयम, मितभाषिता। सम्√यम्+अप् 'यमः समुपनिविषु च' इत्यनेन =संयमः। वाचि संयमः वाक्संयमः (स० त०)। (५) उपशमः—विषय में मन को रोकना, शान्ति। उप√शम्+घञ् 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' इत्यनेन वृद्धिनिषेधः। (६) श्रुतस्य—शास्त्रज्ञान का। 'श्रुतं शास्त्रावधृतयोः' इति विश्वः। (७) अक्रोधः—क्रोध का न होना या होने पर उसको रोकना। न क्रोधः अक्रोधः (न० त०) 'क्वचित् प्रसज्यप्रतिषेधेऽसमास इष्यते'। (८) प्रभवितुः—अधिकारी होने का। प्र√भू+तृच्=प्रभविता, तस्य। (९) निर्व्याजता—निश्छलता। निर्गतः व्याजः यस्मात् स निर्व्याजः (ब० स०), निर्व्याज+तल्+टाप्।

इस श्लोक में शार्दूलविक्रीडित छन्द है।

## अथ दैवपद्धतिः

**नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः**
**स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावतो वारणः।**
**इत्याश्चर्यबलान्वितोऽपि बलभिद्भग्नः परैः संगरे**
**तद्व्यक्तं ननु दैवमेव शरणं धिग्धिग्वृथा पौरुषम् ॥८२॥**

अन्वयः—यस्य नेता बृहस्पतिः, प्रहरणम् वज्रम्, सुराः सैनिकाः, स्वर्गः दुर्गम्; हरेः अनुग्रहः खलु, वारणः ऐरावतः इति आश्चर्यबलान्वितः अपि बलभित् संगरे परैः भग्नः। तत् व्यक्तम् दैवम् एव ननु शरणम् धिक् धिक् पौरुषम् वृथा।

संस्कृत-व्याख्या—यस्य—इन्द्रस्य, नेता—हिताहितोपदेशकः, बृहस्पतिः—सुरगुरुः, प्रहरणम्—आयुधम्, वज्रम्—कुलिशम्, सुराः—देवाः, सैनिकाः—योद्धारः, स्वर्गः—स्वर्लोकः, दुर्गं—शत्रुभिरगम्यं रक्षास्थानम्, हरेः—विष्णोः, अनुग्रहः—कृपा, खलु—निश्चयेन, वारणः—गजः, ऐरावतः—एतन्नामा गजराजः, इति—इत्थम्, आश्चर्यबलान्वितः—अद्भुतशक्तिसम्पन्नः, अपि, बलभित्—इन्द्रः, संगरे—संग्रामे, परैः—शत्रुभिः, भग्नः—विजितः, तत्—तस्मात् कारणात्,

व्यक्तं—स्पष्टं यथा तथा, दैवं—भाग्यम्, एव, ननु—नूनं, शरणं—रक्षकं, धिक् धिक्—भूयो भूयो धिक्कारोऽस्तु. पौरुषं—पुरुषकारः, वृथा—व्यर्थम् ।

अनुवाद—जिस इन्द्र के नेता (सलाहकार) स्वयं बृहस्पति थे, जिसका हथियार वज्र था और सैनिक सारे देवगण, जिसका कि दुर्ग स्वर्ग था और जिस पर स्वयं भगवान् विष्णु की कृपा रहती थी, जिसका ऐरावत हाथी था ऐसे अद्भुतबलसमन्वित इन्द्र समर में अपने शत्रुओं से हार खाकर भाग जाते थे। इसलिये यह स्पष्ट है कि भाग्य का ही एक भरोसा है, छी ! छी !! पौरुष वृथा है ।

Indra, though possessed of wonderful prowess was routed in battle by his enemies, Indra who had बृहस्पति for his adviser (lit. leader) thunder-bolt for his weapon, gods for his warriors, heaven for his fort, and who verily enjoyed the favour of Lord Hari, and had Airavata for his elephant. It is, therefore, clear that fate alone is indeed the (final) refuse, fie. fie. valour is all futile.

संस्कृत-भावार्थ—दैवे सहायके सत्येव पुरुषार्थः सफलो भवति नान्यथा। प्रत्यक्षमेवात्रोदाहरणं देवेन्द्रस्य, यत् सर्वातिशयप्रज्ञाशाली बृहस्पतिस्तस्य परामर्शदाता, वज्रम् आयुधम्, देवाः योद्धारः, स्वर्गो दुर्गम्, विष्णोः कृपा, ऐरावतः गजः इत्येकैकमपि अनुत्तमं, तथापि दैत्यैः स पराजितः । अत्र कारणं—भाग्यं नासीत् तस्य अनुकूल, पुरुषार्थे तु न कापि न्यूनता ।

टिप्पणी—(१) नेता—मार्गदर्शक । √नी+तृच् । (२) बृहस्पतिः—देवगुरु । बृहतां वाचां पतिः बृहस्पतिः (ष० त०) 'तद्बृहतोः करपत्योश्चोरदेवतयोः सुट् तलोपश्च' इत्यनेन सुट् आगमः तकारस्य लोपः । (३) हरेः अनुग्रहः खलु—प्रकट रूप से विष्णु की कृपा। विष्णु इन्द्र के छोटे भाई कहे जाते हैं । 'उपेन्द्र इन्द्रावरजः' इत्यमरः । अतएव भगवान् विष्णु इन्द्र की आज्ञा का पालन करने के लिए सदैव तैयार रहते हैं । (४) ऐरावतः वारणः—ऐरावत हाथी । इराः आपः सन्ति अस्मिन् इति इरावान्=समुद्रः, इरा+मतुप्, मस्य वः, तत्र भवः ऐरावतः इरावत्+अण् । (५) आश्चर्यबलान्वितः—अद्भुत बल से युक्त । आश्चर्यम् बलम् (कर्म० स०), तेन अन्वितः (तृ० त०) । (६) व्यक्तम्—स्पष्ट रूप से । (७) शरणम्—रक्षक । 'शरणं गृहरक्षित्रोः' इत्यमरः । यह शब्द अजहल्लिङ्ग

है । धिक्-धिक्—धिक्कार है । यहां 'वृथा पौरुषं धिक्-धिक्' ऐसा भी अन्वय कर सकते हैं । तब इसका अर्थ होगा—व्यर्थ के पौरुष को धिक्कार है ।

इस श्लोक में बृहस्पतिः, सुराः, स्वर्गः, हरेः, अनुग्रहः, ऐरावतः आदि शब्द विशेष अभिप्राय सूचित करने के लिए प्रयुक्त किये गये हैं, इसलिए परिकर अलंकार है और शार्दूलविक्रीडित छन्द है ।

भाग्य ही मनुष्यों की उन्नति-अवनति में कारण है—

**भग्नाशस्य करण्डपिण्डिततनोर्म्लानेन्द्रियस्य क्षुधा**
**कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।**
**तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा**
**स्वस्थास्तिष्ठत दैवमेव हि परं वृद्धौ क्षये कारणम् ।।८३।।**

अन्वयः—आखुः नक्तम् विवरम् कृत्वा करण्डपिण्डिततनोः क्षुधा म्लानेन्द्रियस्य भग्नाशस्य भोगिनः मुखे स्वयम् निपतितः, तत्पिशितेन तृप्तः असौ सत्वरम् तेन एव पथा यातः । (हे जनाः !) स्वस्थाः तिष्ठत, वृद्धौ क्षये च दैवम् एव हि परम् कारणम् ।

संस्कृत-व्याख्या—आखुः—मूषिकः, नक्तं—रात्रौ, विवरं—बिलं, कृत्वा—विधाय, करण्डपिण्डिततनोः—करण्डे वंशमञ्जूषायां पिण्डिता पुञ्जीकृता तनुः शरीरं यस्य तादृशस्य, क्षुधा—बुभुक्षया, म्लानेन्द्रियस्य—शिथिलकरणस्य, भग्नाशस्य—निराशस्य, भोगिनः—सर्पस्य, मुखे—वदने, स्वयं—स्वतः, निपतितः—गतः, तत्पिशितेन—तस्य मूषिकस्य पिशितेन मांसेन, तृप्तः—सन्तुष्टः, असौ—सर्पः, सत्वरं—शीघ्रं, तेन एव पथा—मूषिककृतेन विवर-मार्गेण एव, यातः—बहिर्गत्वा पलायितः । (हे जनाः !) स्वस्थाः—स्थिरचित्ताः, तिष्ठत, वृद्धौ—उन्नतौ, क्षये—अवनतौ (च), दैवं—भाग्यम्, एव, हि—निश्चयेन, परम्—उत्कृष्टं, कारणं—हेतुः (अस्ति) ।

अनुवाद—एक सांप पिटारे में बन्द, निराश हो, भूख के मारे शिथिल पड़ा गुड़ियाया हुआ बैठा था । रात में एक चूहा उस पिटारे में छेद करके आपसे आप उस सांप के मुंह में जा गिरा । उसका मांस खा, तृप्त होकर वह सांप उसी छेद में होकर तुरन्त बाहर निकल भागा । हे लोगो ! स्थिर रहो, वृद्धि और क्षय

A rat, making a hole at night, into a basket-box, fell of his own accord, into the mouth of a heart-broken serpent coiled therein with all his senses enfeeble by hunger. Being, well satisfied with its flesh, the snake soon went out (of the box) through that very path (cut by the rat). Be at ease, O men, it is destiny alone that is the cause of the rise and fall (of men).

संस्कृत-भावार्थ—कश्चित् सर्पः रात्रौ आहितुण्डिकस्य वंशमञ्जूषायां बुभुक्षितः कुण्डलितः अतिष्ठत्। केनचिच्च मूषकेण भक्ष्याशया स्वदंष्ट्राभिः पेटिकां छित्त्वा अन्तर्गतम्। तत्र गतो मूषिकः सर्पेण भक्षितः। अनन्तरं सर्पः मूषिककृतविवरद्वारेण वहिर्निर्गम्य पलायितः। भोजनविषये भग्नाशस्य सर्पस्य प्रयत्नं विनैव क्षुन्निवृत्तिं बन्धनमुक्तिं च तथा भक्ष्याशया कृतप्रयत्नस्याखोर्विनाशं च दृष्ट्वा निश्चीयते यत् प्राणिनां सम्पत्तौ विपत्तौ च भाग्यमेव कारणं भवति।

टिप्पणी—(१) आखुः—चूहा। आ√खन्+कु। (२) नक्तम्—रात्रि में। (३) करण्डपिण्डिततनोः—पिटारी में सिकुड़े या दबे हुए शरीर वाले। यह 'भोगिनः' का विशेषण है। पिण्डः अस्याः संजातः इति पिण्डिता पिण्ड+इतच् 'तदस्य संजातमिति तारकादिभ्य इतच्' इत्यनेन, टाप्। करण्डे पिण्डिता इति करण्डपिण्डिता (स० त०), तादृशी तनुः यस्य सः (ब० स०), तस्य। (४) म्लानेन्द्रियस्य—जिसकी इन्द्रियाँ शिथिल पड़ गई हैं। √म्लै+क्त=म्लान। इन्द्र+घ=इन्द्रियं। म्लानानि इन्द्रियाणि यस्य स म्लानेन्द्रियः (ब० स०), तस्य। यहाँ म्लान शब्द 'क्षुधा' से सम्बद्ध है, इसलिए सामर्थ्याभावात् समास नहीं होना चाहिए, किन्तु 'सापेक्षत्वेऽपि गमकत्वात् समासः' इस नियम से समास हो गया। (५) भग्नाशस्य—(भोजन की प्राप्ति में) निराश हुए। भग्ना आशा यस्य स भग्नाशः (ब० स०), तस्य। (६) भोगिनः—सर्प के। भोगः फणः अस्ति अस्य इति भोगी भोग+इनि, तस्य। (७) तत्पिशितेन—उस (चूहे) के मांस से। तस्य पिशितम् (ष० त०), तेन। (८) सत्वरम्—शीघ्र। त्वरया सह वर्तमानं यत् तत् ('तेन सहेति तुल्ययोगे' इत्यनेन ब० स०), तत् यथा स्यात् तथा। क्रियाविशेषणे द्वितीया। (९) वृद्धौ क्षये—समृद्धि और विनाश में या उन्नति या अवनति में।

इस श्लोक में शार्दूलविक्रीडित छन्द है।

आर्य और अनार्य के पतन में भेद—

**यथा कन्दुकपातेनोत्पतत्यार्यः पतन्नपि ।**
**तथा त्वनार्यः पतति मृत्पिण्डपतनं यथा ॥८४॥**

अन्वयः—आर्यः पतन् अपि कन्दुकपातेन यथा उत्पतति तथा, तु अनार्यः मृत्पिण्डपतनम् यथा पतति ।

संस्कृत-व्याख्या—आर्यः—उत्तमः जनः, पतन् अपि—कुतश्चित्कारणात् नीचैः गच्छन्नपि, कन्दुकपातेन—गेन्दुकवत् पतनेन, यथा—इव, उत्पतति—ऊर्ध्वं गच्छति, तथा, तु—किन्तु, अनार्यः—नीचो जनः, मृत्पिण्डपतनं यथा—मृत्तिकालोष्टवत्, पतति—नीचैर्गच्छति ।

अनुवाद—सत्पुरुष गेंद की तरह गिरता हुआ भी फिर ऊपर उठता है, पर नीच ढेले की तरह गिरता है (जिससे फिर वह ऊपर नहीं उठ पाता है) ।

A noble man, though fallen, rebounds like the throw (fall) of a ball, the ignoble one fall like the downward fall of a lump of clay.

संस्कृत-भावार्थ—कन्दुकपतनोत्थानवत् सत्पुरुषः परिस्थितिवशात् सकृद् अवनतिं गत्वापि स्वपुरुषार्थेन पुनरपि उन्नतिं करोति, किन्तु दुर्जनः सकृद् अवनतिं प्राप्य न पुनः उन्नतिं गच्छति । सः तथैव विनष्टो भवति यथा मृल्लोष्टम् ।

टिप्पणी—(१) आर्यः—शिष्ट—सुसंस्कृत व्यक्ति को आर्य कहते हैं । आर्य का लक्षण—'कर्तव्यमाचरन्काममकर्तव्यमनाचरन् । तिष्ठति प्रकृताचारे स वा आर्य इति स्मृतः' । इति वसिष्ठः । आराद् यातः इति आर्यः अर्थात् 'आराद् दूरसमीपयोः' इत्यनेन आराद्=असभ्यतादुराचारादिदोषेभ्यो दूरं गतः शिक्षासभ्यताविद्यादिभिः देवास्पदत्वं प्राप्तः इति आर्यः पृषोदरादित्वात् साधुत्वम् अथवा अर्तुं योग्यः इति आर्यः√ऋ+ण्यत् 'ऋहलोर्ण्यत्' इत्यनेन (२) कन्दुकपातेन यथा—गेंद की तरह गिरने से । यहाँ 'यथा' का अर्थ है—सदृश ।

इस श्लोक में अनुष्टुप् छन्द है ।

भाग्यहीन के लिए सर्वत्र विपत्ति ही है—

**खल्वाटो दिवसेश्वरस्य किरणैः संतापिते मस्तके**
**गच्छन्देशमनातपं द्रुतगतिस्तालस्य मूलं गतः ।**

**तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः**
**प्रायो गच्छति यत्र दैवहतकस्तत्रैव यान्त्यापदः ॥८५॥**

अन्वयः—खल्वाटः दिवसेश्वरस्य किरणैः मस्तके सन्तापिते (सति) द्रुतगतिः (सन्) अनातपं देशम् गच्छन् तालस्य मूलं गतः, तत्र अपि पतता महाफलेन अस्य शिरः सशब्दं भग्नम्। दैवहतकः यत्र गच्छति आपदः प्रायः तत्रैव यान्ति।

संस्कृत-व्याख्या—खल्वाटः—निष्केशशिराः, दिवसेश्वरस्य—सूर्यस्य, किरणैः—रश्मिभिः, मस्तके—शिरसि, सन्तापिते—सम्पीडिते (सति), द्रुतगतिः—शीघ्रगामी (सन्), अनातपं—छायायुक्तं प्रदेशं, गच्छन्—व्रजन्, तालस्य—एतन्नामकवृक्षस्य, मूलम्—अधोभागे, गतः—सम्प्राप्तः, तत्र अपि—तस्मिन् स्थलेऽपि, पतता—वृन्तात् गलता, महाफलेन, अस्य—खल्वाटस्य, शिरः—मस्तकं, सशब्दं—शब्देन सहितं यथा स्यात् तथा, भग्नं—विदलितम्। दैवहतकः—दैवोपहतः (जनः), यत्र—यस्मिन् स्थाने, गच्छति, आपदः—विपदः, प्रायः—बहुशः, तत्रैव, यान्ति।

अनुवाद—कोई गंजा मनुष्य सूर्य की किरणों से संतप्त हो, छायादार जगह की खोज में तेजी से चलता-चलता एक ताल के वृक्ष के नीचे जा खड़ा हुआ। पर वहाँ पर भी ताल का बड़ा भारी फल जोर से उसके सिर पर गिर पड़ा, जिससे उसका सिर फटकर फूट गया। प्रायः देखा जाता है कि अभागा जहाँ-जहाँ जाता है, विपत्ति भी वहीं उसके पीछे-पीछे लगी जाती है।

A bald man, being scorched up on his head by the rays of the sun, speeding fast, looking for a shady (lit. sun-less) place, went to the root of a Palmyra tree; There, too, his head was broken with a great crash by a big Tala fruit falling from the tree. Misfortunes go wherever the ill-fatedman goes. Or misfortunes follow the unlucky, wherever they go.

संस्कृत-भावार्थ—दैवोपहतान् जनान् विपदः सर्वत्र पीडयन्ति। यथा कश्चित् खल्वाटः आतपसन्तप्तः सन् छायाभिलाषी भूत्वा एकस्य तालवृक्षस्य अधस्तात् उपविष्टः। तदैव उपरितः वेगेन पतता तालफलेन तस्य मस्तकं स्फुटितम्।

टिप्पणी—(१) खल्वाटः—गंजा, जिसके सिर पर बाल न हों। सिर के बालों का झड़ जाना खलति रोग है। यही दुर्भाग्य हुआ। ऐसा एक व्यक्ति गंजे

सिर पर धूप लगने से व्याकुल होकर छाया के लिए इधर-उधर भागने लगा। ताल वृक्ष के निकट जाने पर उसे कुछ छाया प्राप्त हुई। पर वहाँ भी दुर्भाग्य वश उसके सिर पर ताल का एक फल गिरा जिससे उसका गंजा सिर बड़े जोर के शब्द के साथ फूट गया। इसलिए कहा जाता है कि अभागा जहाँ भी जाता है, आपत्तियाँ भी वहीं पहुँच जाती हैं। (२) मस्तके—अत्र भावे सप्तमी। मस्तके सन्तापिते सति। (३) द्रुतगतिः—फुर्ती से चलने वाला। द्रुता गतिः यस्य सः (ब० स०)। (४) अनातपम्—धूप से रहित। अविद्यमानः आतपः यस्मिन् स अनातपः (न० ब० स०), तम्। (५) सशब्दम्—शब्द के साथ। शब्देन सह वर्तमानं यत् (तुल्ययोगे बहुव्रीहिः) तत् यथा स्यात् तथा। क्रियाविशेषणे द्वितीया। (६) दैवहतकः—भाग्य का मारा हुआ, अभागा मनुष्य। दैवेन हतः इति दैवहतः (तृ० त०), स्वार्थे कन् प्रत्ययः। अथवा हतं दैवं यस्य स हतदैवः वा दैवहतः (ब० स०), 'वाहिताग्न्यादिषु' इति सूत्रेण विकल्पेन दैवशब्दस्य पूर्वप्रयोगः, ततः 'शेषाद्विभाषा' इति सूत्रेण समासान्तः कप्।

इस श्लोक में अर्थान्तरन्यास अलंकार है और शार्दूलविक्रीडित छन्द है।

पुनः भाग्य की प्रबलता का निदर्शन—

**गजभुजंगविहंगमबन्धनं शशिदिवाकरयोर्ग्रहपीडनम्।**
**मतिमतां च विलोक्य दरिद्रतां विधिरहो बलवानिति मे मतिः ॥८६॥**

अन्वयः—गजभुजङ्गविहङ्गमबन्धनं—हस्तिसर्पपक्षिणां बन्धनं नियमनं, शशिदिवाकरयोः—चन्द्रसूर्ययोः, ग्रहपीडनं—ग्रहेण राहुणा पीडनं ग्रासः, मतिमतां—बुद्धिमतां, दरिद्रतां—निर्धनतां, च, विलोक्य—दृष्ट्वा, अहो—आश्चर्यम्, विधिः—दैवं, बलवान्—शक्तिशाली, इति—एतादृशी, मे—मम, मतिः—बुद्धिः निश्चय इति यावत्।

अनुवाद—हाथी, साँप और पक्षी का बाँधा जाना, चन्द्रमा और सूर्य में ग्रहण लगना और बुद्धिमानों की दरिद्रता को देखकर मेरी राय में तो यही बात ठीक जँचती है कि "भाग्य बलवान् है"।

Seeing the capture of the elephant, the serpent and the bird; seeing the oppression of the sun and the moon by the planet

Rahu; and seeing the poverty of the talented people, I do think, "Ah! Destiny is all powerful."

संस्कृत-भावार्थ—गगनविहारिणौ तेजस्विनौ च सूर्याचन्द्रमसौ छायाग्रहेण राहुणा ग्रस्येते, वने स्वच्छन्दं विहरन्तो वलिनो गजा विषधरा नागाश्च जनैः वशीक्रियन्ते, बुद्धिमन्तोऽपि क्वचिद् दारिद्र्यमनुभवन्ति इति दर्श दर्श निश्चिनोमि यद् भाग्यं सर्वेषामपि बलिष्ठम्।

टिप्पणी—(१) गजभुजङ्गविहङ्गमबन्धनम्—हाथी, साँप और पक्षी का (वश में करके) बाँधा जाना। गजश्च भुजङ्गश्च विहङ्गमश्च इति गजभुजङ्ग-विहङ्गमा. (द्व० स०), तेषां बन्धनम् (ष० त०)। भुजं वक्रं गच्छति इति भुज √गम्+खच् 'गमेः सुपि वाच्यः' इत्यनेन, 'अरुर्द्विषदजन्तस्य मुम्' इत्यनेन मुमा-गमः, 'खच्च डिद्वा वाच्यः' इत्यनेन विकल्पेन डित्वात् पक्षे टिलोपः=भुजङ्गमः वा भुजङ्गः। इसी तरह विहङ्गमः वा विहङ्गः, विहायसा आकाशेन गच्छति इति विहायस्√गम्+खच् आदि पूर्ववत्, विहायसो विह इति वाच्यम्' इत्यनेन विह आदेशः। (२) शशिदिवाकरयोः—चन्द्रमा और सूर्य का। शशी च दिवाकरश्च इति शशिदिवाकरौ (द्व० स०), तयोः। कर्मणि षष्ठी 'कर्तृकर्मणोः कृति' इत्य-नेन। (३) ग्रहपीडनम्—ग्रह (राहु) द्वारा सताया जाना। √ग्रह्+अच् पचा-दित्वात्=ग्रहः। ग्रहेण पीडनम् (तृ० त०)। (४) विलोक्य—यहाँ 'समानक-र्तृकयोः पूर्वकाले' सूत्र से समानकर्तृकत्व में क्त्वा प्रत्यय करने के लिए 'स्थितस्य' पद का अध्याहार करना चाहिए। इस श्लोक की तुलना कीजिए—'विधु-रपि विधियोगाद् ग्रस्यते राहुणासौ, लिखितमपि ललाटे प्रोज्झितुं कः समर्थः' (हितोपदेश)।

इस श्लोक मे अर्थान्तरन्यास तथा काव्यलिंग अलंकार हैं। इसमें द्रुतविल-म्बित छन्द है। छन्द का लक्षण—'द्रुतविलम्बितमाह नभौ भरौ'।

अनुचितकारी विधाता—

**सृजति तावदशेषगुणाकरं पुरुषरत्नमलंकरणं भुवः।**
**तदपि तत्क्षणभङ्गि करोति चेदहह कष्टमपण्डितता विधेः॥८७॥**

अन्वयः—(विधिः) तावत् अशेषगुणाकरम् भुवः अलंकरणम् पुरुषरत्नम् सृजति। तदपि तत्क्षणभङ्गि करोति चेत् विधेः अपण्डितता, अहह कष्टम्।

संस्कृत-व्याख्या—(विधिः) तावत्, अशेषगुणाकरं—सकलगुणनिधि, भुवः—पृथिव्याः, अलंकरणं—भूषणं, पुरुषरत्नं—नरश्रेष्ठं, सृजति—निर्माति, तदपि—तथापि सृजन् अपि इत्यर्थः तत्—पुरुषरत्नं, क्षणभङ्गि—क्षणभङ्गुरं, करोति चेत्—विदधाति यदि, (तर्हि) विधेः—स्रष्टुः, अपण्डितता—मूर्खता, अहह कष्टम्—अतिकृच्छ्रम् ।

अनुवाद—ब्रह्मा सर्वगुणसम्पन्न तथा पृथ्वी के भूषण पुरुषरत्न की सृष्टि तो करता है सही परन्तु उसे वह क्षणभंगुर बना देता है । हाय ! दुःख ! ब्रह्मा की कैसी मूर्खता है ।

The Creator does create a gem of man, an ornament of the world, a mine of all good qualities: still if he makes that (gem in form of a man) very frail, then alas ! woe to the folly of the Creator !

संस्कृत-भावार्थ—विधाता यदि सकलगुणनिधि कञ्चिन्नररत्नमुत्पादयति तर्हि स तेन चिरञ्जीवो विधेयः । स्वल्पायुषस्तस्य सर्जनं तु विधातुर्मूर्खतां सूचयति ।

टिप्पणी—(१) (विधिः)—यह 'सृजति' का लुप्त कर्ता है । (२) तावत्—यहाँ अवधारणार्थक अव्यय है । 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे' इत्यमरः । (३) अशेषगुणाकरम्—निखिल गुणों की खान । अशेषाः गुणाः (कर्म० स०), अशेषगुणानाम् आकरः (ष० त०), तम् । यह 'पुरुषरत्नम्' का विशेषण है । (४)पुरुषरत्नम्—नरश्रेष्ठ को । पुरुषेषु रत्नं श्रेष्ठः (स० त०) । 'जातौ जातौ यदुत्कृष्टं तद्रत्नमिति कथ्यते' । अथवा पुरुषः एव रत्नम् (मयूरव्यंसकादित्वात् रूपकरूप स०) । यहाँ पुरुषः रत्नम् इव—उपमित स० नहीं कर सकते, क्योंकि 'क्षणभङ्गि' यहाँ नपुंसक शब्द स्पष्ट बता रहा है कि यहाँ प्रधानता 'रत्नम्' की है । (५) तदपि—तथापि । यहाँ कोई 'तत्' का अर्थ पुरुषरत्न और 'तत्क्षणभङ्गि' की व्याख्या 'स एव क्षणः तत्क्षणः, तस्मिन् भज्यते इत्येवंशीलम्' करते हैं, जो समीचीन नहीं है । क्योंकि इसका तात्पर्य होगा—'पुरुषरत्न उसी क्षण अर्थात् पैदा होते ही मर जाता है' । ऐसा कहाँ होता ? (६) क्षणभङ्गि—क्षणभंगुर, अल्पायु । क्षणेन क्षणमात्रेण भङ्क्तुं शीलं यस्य तत् क्षण√भञ्ज्+घिनुण् (ताच्छील्ये)=क्षणभङ्गि । (७) अहह—यह खेदसूचक अव्यय है । 'अहहेत्यद्भुते खेदे' इत्यमरः ।

इस श्लोक में द्रुतविलम्बित छन्द है।

विधिकर लिखा को मेटनहारा—

अयममृतनिधानं नायकोऽप्योषधीनाम्
शतभिषगनुयातः शंभुमूर्ध्नोऽवतंसः।
विरहयति न चैनं राजयक्ष्मा शशाङ्कं
हतविधि परिपाकः केन वा लङ्घनीयः ॥८८॥

अन्वयः—अयम् अमृतनिधानम् (अपि) ओषधीनाम् नेता अपि शतभिषगनुयातः (अपि) शम्भुमूर्ध्नः अवतंसः (अपि) (तथापि) राजयक्ष्मा एनम् शशाङ्कम् च न विरहयति। हतविधिपरिपाकः केन वा लङ्घनीयः।

संस्कृत-व्याख्या—अयं दृश्यमानः चन्द्रः, अमृतनिधानम्—अमृतस्य पीयूषस्य निधानं स्थानम् (अपि), ओषधीनां—संजीवन्यादीनां, नेता अपि—नायकः अपि, शतभिषगनुयातः—शतभिषजा नक्षत्रेण शतेन भिषग्भिः वैद्यैश्च अनुयातः अनुसृतः (अपि), शम्भुमूर्ध्नः—शिवमस्तकस्य, अवतंसः—शिरोभूषणम् (अपि), (तथापि) राजयक्ष्मा—क्षयरोगः, एनम्—उक्तविशेषणविशिष्टं, शशाङ्कं—चन्द्रं, न च—नैव, विरहयति—त्यजति तमपि पीडयतीत्यर्थः। (अतः) हतविधिपरिपाकः—हतविधेः नष्टदैवस्य परिपाकः नियोगः, केन वा—पुंसा, लङ्घनीयः—अतिक्रमणीयः? न केनापीत्यर्थः।

अनुवाद—यद्यपि यह (चन्द्रमा) अमृत का खजाना है, संजीवनी आदि ओषधियों का स्वामी है, सौ वैद्यों से घिरा रहता है और स्वयं शिव के शिर का भूषण है तथापि इस चन्द्रमा को भी राजयक्ष्मा रोग नहीं छोड़ता—इसे भी धर दबाता है। अथवा भाग्य का लिखा—विधि के विधान को कौन मिटा सकता है? (दुर्भाग्य के फल को कौन लांघ सकता है?)

Though he is the repository of ambrosia, and the lord of herbs; though he is followed by hundred physicians (or the constellation Satabhisak) and is the crest ornament of the head of Lord Shiva, yet consumption does not spare the moon, or who can transgress the ordinance (consequence) of accursed fate?

संस्कृत-भावार्थ—दुर्भाग्यपरिणामं कोऽपि लङ्घयितुं न समर्थः। चन्द्रमेव पश्य, अयं हि अमृतस्य निधानम्, संजीवन्याद्योषधीनां नायकः, शतवैद्यैरावृतः, भगवतः शङ्करस्य मस्तके निवसति, तथाप्येनं राजयक्ष्मरोगो न त्यजति।

टिप्पणी—(१) अमृतनिधानम्—अमृत का कोश। निधीयते अस्मिन् इति निधानम् नि√धा+ल्युट् अधिकरणे। अमृतस्य निधानम् (ष० त०)। (२) ओषधीनाम्—संजीवनी आदि ओषधियों का। ओषः पाकः धीयते अत्र इति ओषधयः ओष√धा+कि, तासाम्। (३) नेता—नायक। √नी+तृच्। चन्द्रमा सभी ओषधियों का स्वामी माना जाता है। (४) शतभिषगनुयातः—सैकड़ों वैद्यों या शतभिषा नक्षत्र से घिरा हुआ। शतं भिषजः (कर्म० स०), शतभिषग्भिः अनुयातः (तृ० त०) अथवा शतभिषजा शतभिषानक्षत्रेण अनुयातः (तृ० त०)। शतभिषा नक्षत्र सत्ताइस नक्षत्रों में से चौबीसवाँ है। इसमें सौ तारों की स्थिति मानी जाती है। (५) शम्भुमूर्ध्नः—शिव के मस्तक का। शम्भोः मूर्धा (ष० त०), तस्य। (६) अवतंसः—आभूषण। अव√तंस्+घञ्। (७) राजयक्ष्मा—क्षयरोग। राज्ञः चन्द्रस्य यक्ष्मा इति राजयक्ष्मा (ष० त०) अथवा यक्ष्मणां रोगाणां राजा इति राजयक्ष्मा 'राजदन्तादिषु परम्' इत्यनेन राजशब्दस्य पूर्वपदत्वम् अथवा राजा चासौ यक्ष्मा च इति राजयक्ष्मा (कर्म० स०), 'अनेकरोगानुगतो बहुरोगपुरोगमः। राजयक्ष्मा क्षयोऽशेषरोगराडिति च स्मृतः॥' 'नक्षत्राणां द्विजानां च राज्ञोऽभूद्यदयं पुरा, यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः'। (८) हतविधिपरिपाकः—दुर्भाग्य के परिणाम को। हतः विधिः (कर्म० स०), तस्य परिपाकः नियोगः विधानं वा (ष० त०)।

इस श्लोक में मालिनी छन्द है। छन्द का लक्षण—'ननमयययुतेयं मालिनी भोगिलोकैः'।

भाग्य जो न करे—

> प्रियसख ! विपद्दण्डाघातप्रपातपरम्परा-
> परिचयचले चिन्ताचक्रे निधाय विधिः खलः।
> मृदमिव बलात्पिण्डीकृत्य प्रगल्भकुलालवद्
> भ्रमयति मनो नो जानीमः किमत्र विधास्यति ॥८९॥

अन्वयः—हे प्रियसख ! खलः विधिः प्रगल्भकुलालवत् मनः मृदम् इव बलात् पिण्डीकृत्य विपद्दण्डाघातप्रपातपरम्परापरिचयचले चिन्ताचक्रे निधाय भ्रमयति, अत्र किम् विधास्यति इति नो जानीमः ।

संस्कृत-भावार्थ—प्रियसख—प्रियमित्र !, खलः—दुष्टः, विधिः—ब्रह्मा, प्रगल्भकुलालवत्—प्रगल्भः चतुरः कुलालः कुम्भकारः तद्वत्, मनः—चित्तं, मृदम् इव—मृत्तिकाम् इव, बलात्—हठात्, पिण्डीकृत्य—कपालीकृत्य, विपद्दण्डाघात-प्रपातपरम्परापरिचयचले—विपद विपत्तिः एव दण्डः तस्य आघाताः प्रहाराः तेषां प्रपाताः अतिशयपतनानि तेषां परम्परा पुनरावृत्तिः तस्याः परिचयः संस्तवः तेन चलति इति चलं गमनशीलं तादृशे, चिन्ताचक्रे—चिन्ता एव चक्रं तस्मिन्, निधाय—स्थापयित्वा, भ्रमयति—आघूर्णयति, अत्र—भ्रमणे, किं विधास्यति—किं करिष्यति, इति, नो—नहि, जानीमः—विद्मः ।

अनुवाद—प्रिय मित्र ! दुष्ट ब्रह्मा ढीठ कुम्हार की भाँति मेरे चित्त को माटी का लोंदा (मृत्पिण्ड) बना कर चिन्तारूपी चाक पर उसे चढ़ा कर विपत्तिरूपी डण्डे की मार से घुमा (नचा) रहा है। मैं नहीं जानता, वह क्या करेगा । कैसी-कैसी विपत्ति मुझ पर पड़ेगी, मैं नहीं जानता ।

Dear friend, wicked fate, like a skilful potter, having perforce rolled our mind, like a lump of clay, whirls it round and round by placing it on the wheel of anxiety, revolving on, being driven by the series of the fall of the strokes of the rod in the form of adversity, we do not know what fate will do in this matter.

संस्कृत-भावार्थ—कुम्भकारो यथा मृत्पिण्डं चक्रे संस्थाप्य दण्डेन नर्तयति तथैव विधिरपि मानवमनः बहुविधासु चिन्तासु निक्षिप्य विपद्दण्डप्रहारैः तद् बहुशो नर्तयति पीडयति च ।

टिप्पणी—(१) प्रियसख—हे प्रिय मित्र ! प्रियश्चासौ सखा च इति प्रियसखः (कर्म० स०), प्रियसखि+टच् 'राजाहःसखिभ्यष्टच्' इत्यनेन=प्रियसखः, तत्सम्बोधने । (२) प्रगल्भकुलालवत्—प्रौढ़ कुम्हार की तरह । प्रगल्भः कुलालः (कर्म० स०), तेन तुल्यः प्रगल्भकुलाल+वति । (३) पिण्डीकृत्य—गोला बना कर । अपिण्डं पिण्डं करोति इति पिण्ड+च्वि, ईत्व√कृ+क्त्वा—ल्यप्, तुक्

आगम। (४) विपद्दण्डाघातप्रपातपरम्परापरिचयचले—विपत्ति रूपी डंडे के गिरने की परम्परा के परिचय से चलायमान। विपत् एव दण्डः (मयूरव्यंसकादित्वात् रूपकरूपसमासः), तस्य आघाताः (ष० त०), तेषां प्रपाताः (ष० त०), तेषां परम्परा (ष० त०), तस्याः परिचयः (ष० त०), तेन चलम् (तृ० त०), तस्मिन्। यह 'चिन्ताचक्रे' का विशेषण है। चलतीति चलम् √चल्+अच् पचादित्वात्। (५) चिन्ताचक्रे—चिन्ता रूप चक्र पर। चिन्ता एव चक्रम् (मयू० रूपकरूपस०), तस्मिन्।

इस श्लोक में उपमा अलंकार है और हरिणी छन्द है। हरिणी का लक्षण—'नसमरसला गः षड्वेदैर्हयैर्हरिणी मता'।

सत्पुरुष को कोई धैर्यच्युत नहीं कर सकता—

विरम विरमायासादस्माद्दुरध्यवसायतो
विपदि महतां धैर्यध्वंसं यदीक्षितुमीहसे।
अयि! जडविधे! कल्पापायेऽप्यपेतनिजक्रमाः
कुलशिखरिणः क्षुद्रा नैते न वा जलराशयः ॥९०॥

अन्वयः—अयि जडविधे! अस्मात् दुरध्यवसायतः आयासात् विरम विरम, यत् विपदि महतां धैर्यध्वंसम् ईक्षितुम् ईहसे, कल्पापाये अपि एते कुलशिखरिणः क्षुद्राः सन्तः अपेतनिजक्रमाः न; न वा जलराशयः (तादृशः)।

संस्कृत-व्याख्या—अयि जडविधे—मतिमन्ददैव!, अस्मात्—क्रियमाणात्, दुरध्यवसायतः—दुष्टः अध्यवसायः उद्योगः यस्मिन् सः तस्मात्, आयासात्—प्रयासात्, विरम विरम—आभीक्ष्ण्येन विरतो भव, यत्, विपदि—आपदि, महतां—महात्मनां, धैर्यध्वंसं—धैर्यभ्रंशम्, ईक्षितुं—द्रष्टुम्, ईहसे—इच्छसि। कल्पापाये अपि—कल्पान्ते अपि, एते, कुलशिखरिणः—कुलपर्वताः, क्षुद्राः—नीचाः (सन्तः) अपेतनिजक्रमाः—विनष्टमर्यादाः, न (भवन्ति), न वा जलराशयः—समुद्राः (तादृशाः) अथवा एते—महापुरुषाः, कल्पापायेऽपि—कल्पान्तेऽपि, अपेतनिजक्रमाः—अतिक्रान्तस्वमर्यादाः, कुलशिखरिणः—कुलपर्वताः, न, न वा जलराशयः—समुद्राः (सन्ति) अर्थात् कुलपर्वताश्च समुद्राश्च कल्पान्ते स्वस्वमर्यादां त्यजन्ति परन्तु एते महापुरुषाः महासंकटेऽपि स्वमर्यादां न त्यजन्ति।

अनुवाद—रे मतिमन्द विधि ! तू जो विपत्तिकाल में महापुरुषों का धैर्य-नाश देखने की चेष्टा करता है, अपने उस दुष्ट प्रयास को छोड़ो। कल्पान्त होने पर भी कुलपर्वत और समुद्र इतने छोटे नहीं होते कि अपनी मर्यादा को लाँघ जायें।

O fate ! if you desire to see the fortitude of the magnanimous giving way in adversity, desist, please desist from this endeavour, your wicked pursuit. O block-headed fate ! even at the time of the final destruction of the world, neither the Kula mountains nor the oceans are so mean as to transgress their usual bounds *i. e.* they remain within their bounds. Or O ye block-head, they are not meanminded Kula-mountain or the oceans, who transgress their bounds at the time of destruction of the creation.

संस्कृत-भावार्थ—कुलपर्वताश्च समुद्राश्च कल्पान्ते स्वमर्यादां परित्यजन्ति, परन्तु एते महापुरुषाः विपत्तावपि धैर्यं न परित्यजन्ति अथवा यथा कल्पान्ते कुलपर्वताः सप्तसमुद्राश्च स्वमर्यादां न परित्यजन्ति तथैव इमे महापुरुषाः विपत्तावपि स्वधैर्यं न परित्यजन्ति। महता धैर्येण कार्यं सम्पादयन्ति संकटैश्च सह युध्यन्तः तेषां पारं गच्छन्ति। संकटेभ्यो भीता न भवन्ति।

टिप्पणी—(१) दुरध्यवसायतः—दुष्ट चेष्टा वाले। अधि-अव√सो+घञ् =अध्यवसायः। दुष्टः अध्यवसायः यस्मिन् सः (ब० स०), तस्मात्, दुरध्यवसाय +तस्। यह 'आयासात्' का विशेषण है। (२) आयासात्—प्रयास या प्रयत्न से। आ√यस्+घञ्=आयासः, तस्मात् 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इति वार्तिकेन 'विरम' इति योगे अपादाने पञ्चमी। (३) धैर्यध्वंसम्—धैर्य का नाश। √ध्वंस्+घञ्=ध्वंसः, धैर्यस्य ध्वंसः (ष० त०), तम्। यह 'ईक्षितुम्' का कर्म है। (४) कल्पापाये—कल्पान्त या प्रलय में। कल्पस्य सृष्टेः अपायः नाशः (ष० त०), तस्मिन्। (५) कुलशिखरिणः—कुलपर्वत। सात कुलपर्वत माने जाते हैं—'महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः। विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः॥' अपेतनिजक्रमाः—जिनकी अपनी मर्यादा नष्ट हो चुकी हो या जो सीमा का उल्लंघन कर चुके हों। अपेताः नष्टाः निजक्रमाः निजमर्यादाः येषां ते अपेतनिजक्रमाः (ब० स०)। जलराशयः—समुद्र। समुद्र भी सात माने जाते हैं—'लवणेक्षुसुरासर्पिर्दधिक्षीरजलार्णवाः'। श्लोक का भाव यह है कि कुलाचल या समुद्र प्रलयकाल में अपनी मर्यादा का उल्लंघन कर देते हैं किन्तु सज्जन

प्रलय में भी अमर्यादित नहीं होते। तुलना कीजिए—'गिरयो गुरवस्तेभ्योऽप्युर्वी गुर्वी ततोऽपि जगदण्डम्। तस्मादप्यतिगुरवः प्रलयेऽप्यचला महात्मानः ।।'

इस श्लोक में व्यतिरेक या दृष्टान्त अलंकार है और हरिणी छन्द है।

भाग्य में जितना लिखा है उतना ही मिलता है—

**दैवेन प्रभुणा स्वयं जगति यद्यस्य प्रमाणीकृतं**
**तत्तस्योपनमेन्मनागपि महान्नैवाश्रयः कारणम् ।**
**सर्वाशापरिपूरके जलधरे वर्षत्यपि प्रत्यहं**
**सूक्ष्मा एव पतन्ति चातकमुखे द्वित्राः पयोबिन्दवः ।।६१।।**

अन्वयः—प्रभुणा दैवेन जगति यस्य यत् स्वयम् प्रमाणीकृतम् तत् तस्य स्वयम् उपनमेत्, महान् आश्रयः मनाक् अपि नैव कारणम्। सर्वाशापरिपूरके जलधरे प्रत्यहम् वर्षति अपि चातकमुखे सूक्ष्माः एव द्वित्राः पयोबिन्दवः पतन्ति।

संस्कृत-व्याख्या—प्रभुणा—समर्थेन, दैवेन—भाग्येन, जगति—संसारे, यस्य—नरस्य, यत्—वस्तु, स्वयं—साक्षात्, प्रमाणीकृतं—निर्दिष्टम्, तत्—वस्तु, स्वयं—तस्य—नरस्य, विना कस्यापि साहाय्येन, उपनमेत् संगच्छेत्, महान् आश्रयः—महतां साहाय्यं, मनाक् अपि—ईषदपि, नैव, कारणं—साधनम्। सर्वाशापरिपूरके—सर्वेषां सकलानां (लोकानाम्) आशा मनोरथः तस्य परिपूरकः दायकः तथाभूते, जलधरे—मेघे, प्रत्यहं—प्रतिदिनं, वर्षति अपि, चातकमुखे—चातकस्य पक्षिणः मुखे वदने, सूक्ष्माः—अत्यल्पाः, एव, द्वित्राः—द्वौ वा त्रयो वा, पयोबिन्दवः—जलकणाः, पतन्ति।

अनुवाद—सर्वशक्तिमान् दैव ने जिसको जितनी वस्तु अपने आप लिख दी है, उसको वह वस्तु उतनी मिलेगी ही। बड़ा आश्रय इसका तनिक भी कारण नहीं। सबों की आशा पूरी करने वाला मेघ प्रतिदिन बरसता रहता है तो भी चातक के मुंह में दो ही तीन बूंदें गिरती हैं।

Whatever is allotted to a man by all powerful Destiny, presents itself to him. Great patronage is not at all the cause (of his getting anything). Though the cloud, the fulfiller of the desires of all, showers rain everyday, still only two or three small drops of water fall into the mouth of the Chataka bird.

**संस्कृत-भावार्थ**—विधिना संसारे यस्य प्राणिनः कृते यद् वस्तु निर्दिष्टं तत् स प्राणी अवश्यं प्राप्नोति, ततोऽधिकं न्यूनं वा स नैव प्राप्नोति, नापि तत्र महताम् आश्रयः कारणम् । अतएव महतां नरपतीनामाश्रयं लब्ध्वापि भाग्यहीनो नरः आजीवनं निर्धनः एव तिष्ठति, महताम् आश्रयं विनापि भाग्यशाली जनः यथेष्टां समृद्धिं लभते । तथैव मेघाः जलदानेन सर्वान् तोषयन्ति हतभाग्यः चातकः एव ईदृशः अस्ति यं ते अपि तोषयितुं न शक्नुवन्ति ।

**टिप्पणी**—(१) **प्रभुणा**—शक्तिशाली । प्रभवति इति प्रभुः प्र√भू+डु (उणादि), तेन । (२) **प्रमाणीकृतम्**—प्रमाणित किया है अर्थात् नियत किया है । अप्रमाणम् प्रमाणं कृतम् इति प्रमाण+च्वि√कृ+क्त, ईत्व । (३) **उपनमेत्**—उपलब्ध होती या मिल जाती है । उप√नम्+विधिलिङ् संभावनायाम् । तुलना कीजिए—'कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा' (उ० मेघ) । (४) **महान् आश्रयः मनाक् अपि नैव कारणम्**—बड़ा आश्रय या बड़े लोगों का सहारा कुछ भी कारण नहीं है । तात्पर्य यह है कि भाग्य में जितना लिखा है, उतना ही मिलता है और वह अवश्य मिलता है । उसके मिलने में बड़े लोगों का आश्रय कोई कारण नहीं होता है । (५) **सर्वाशापरिपूरके**—सभी या सबके मनोरथ पूर्ण करने वाले । सर्वाः आशाः (कर्म० स०), तासां परिपूरकः (ष० त०), तस्मिन् । अथवा सर्वेषाम् आशाः, तासाम् परिपूरकः (ष० त०), तस्मिन् । (६) **जलधरे**—मेघ । धरतीति धरः√धृ+अच् पचादित्वात्, जलस्य धरः जलधरः (ष० त०), तस्मिन् । अत्र भावे सप्तमी । (७) **प्रत्यहम्**—प्रतिदिन । अहनि अहनि इति प्रत्यहम् (अव्य० स०) 'अनश्च', 'नपुंसकादन्यतरस्याम्' इत्यनेन समासान्तः टच्प्रत्ययः । (८) **द्वित्राः**—दो या तीन । द्वौ वा त्रयो वा इति द्वित्राः (वार्थे बहुव्रीहिः) 'संख्यया अव्ययासन्नादूराधिकसंख्याः संख्येये' इत्यनेन । 'बहुव्रीहौ संख्येये डजबहुगणात्' इत्यनेन डच्प्रत्ययः, ततो बहुवचनत्वम् 'तत्र युक्ते बहुवचनम्' इति भाष्यकारः ।

इस श्लोक में दृष्टान्त अलंकार है और शार्दूलविक्रीडित छन्द है ।

## अथ कर्मपद्धतिः

नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगा
विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः ।

**फलं कर्मायत्तं यदि किमपरैः किं च विधिना**
**नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥९२॥**

अन्वयः—देवान् नमस्यामः, ते अपि हतविधेः वशगाः ननु, विधिः वन्द्यः सः अपि प्रतिनियतकर्मैकफलदः, यदि फलम् कर्मायत्तम्, तर्हि अपरैः किम् ? विधिना च किम् ? तत् कर्मभ्यः नमः, येभ्यः विधिः अपि न प्रभवति ।

संस्कृत-व्याख्या—देवान्—इन्द्रादीन्, नमस्यामः—नमस्कुर्मः, ते अपि—देवाः अपि, हतविधेः—दुष्टस्य विधातुः, वशगाः—अधीनाः, ननु—खलु । वन्द्यः—पूज्यः, सः अपि—विधिः अपि, प्रतिनियतकर्मैकफलदः—प्रतिनियतं निर्णीतं यत् कर्मैकफलं तत् ददातीति प्रतिनियतकर्मैकफलप्रदः (अस्ति), यदि—चेत्, फलं, कर्मायत्तं—कर्माधीनं, (तर्हि) अपरैः—देवैः, किम् ? विधिना—ब्रह्मणा, च, किम् ? तत्—तस्मात् कारणात्, कर्मभ्यः—प्रयत्नरूपेभ्यः कार्येभ्यः, नमः—नमस्कारोऽस्तु, येभ्यः—कर्मभ्यः, विधिः अपि—ब्रह्मा अपि, न, प्रभवति—प्रभवो भवति ।

अनुवाद—देवताओं को प्रणाम करता हूँ, पर वे भी दुष्ट विधि के वश में हैं । तब वह विधि ही वन्दनीय है, पर वह भी कर्म के अनुसार ही निश्चित फल देता है । यदि फल कर्म ही पर निर्भर है, तब दूसरों की क्या ज़रूरत ? विधि से भी क्या प्रयोजन ? इसलिए कर्म को ही प्रणाम, जिस पर विधि का भी कुछ भी वश नहीं चलता ।

We salute gods, they, too are subject to accursed; the fate ought to be worshipped; but even fate gives only the well-adjusted fruit of one's action. If the fruit be dependent on one's actions. what to do with gods or what with our destiny? Therefore all our of obeisance to action; which even fate cannot prevail.

संस्कृत-भावार्थ—सर्वं कर्तुं समर्था ये देवा मन्यन्ते ते अपि विधिमतिक्रम्य न किमपि कर्तुं शक्नुवन्ति । विधिश्च कर्मानुरूपमेव फलं दत्ते, न ततोऽधिकं न्यूनं वा । अतो देवान् विधिं चोपेक्ष्य कर्मभ्य एव नमस्यामः । यतो हि देवानां प्रभुरपि विधिः कर्मवशगः ।

टिप्पणी—(१) नमस्यामः—नमस्कार करें । नमः कुर्मः इति नमस्यामः नमस्+क्यच् 'नमोवरिवश्चित्रङः क्यच्' इत्यनेन,√नमस्य (नामधातु) +लट्—

मस् । यहाँ 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इस परिभाषा के बल से 'देवान्' में द्वितीया ही हुई 'नमः' पद के योग में चतुर्थी नहीं हुई। (२) हतविधेः—नीच विधाता के। हतः विधि. (कर्म० स०), तस्य। सम्बन्धे षष्ठी। (३) वशगाः—अधीन । वशं गच्छन्ति इति वशगाः वश√गम्+ड । (४) प्रतिनियतकर्मैकफलदः—जो कर्म के अनुसार ही निश्चित फल देता है । एकं केवलं फलम् इति एकफलम् (कर्म० स०) 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन' इत्यनेन । कर्मणः एकफलम् इति कर्मैकफलम् (ष० त०), प्रतिनियतं कर्मैकफलम् इति (कर्म० स०), प्रतिनियतकर्मैकफलं ददातीति प्रतिनियतकर्मैकफलदः, प्रतिनियतकर्मैकफल√दा+क, उपपद स० । (५) अपरैः, विधिना—अत्र करणे तृतीया । 'गम्यमानापि क्रिया कारकविभक्तौ प्रयोजिका' । अपरैः किं साध्यम् ? साधनक्रियां प्रति करणत्वम् । (६) कर्मभ्यः—अत्र नमः शब्दयोगे चतुर्थी 'नमः स्वस्तिस्वाहास्वधालंवषड्योगाच्च इत्यनेन। (७) येभ्यः—अत्रापि 'नमः स्वस्ति—' इत्यनेन अलमर्थयोगे चतुर्थी। प्रभवति=प्रभुः भवति, अलम्। प्रभ्वादियोगे षष्ठी अपि साधुः; तस्मै प्रभवति। 'प्रभुः बुभूषुः भुवनत्रयस्य' इति सिद्धम् । सि० कौ० ।

इस श्लोक में पूर्व पूर्व वाक्य उत्तरोत्तर वाक्य के प्रति उत्कर्षकारक है, इसलिए मालादीपक अलंकार है । किन्हीं के मत से सार अलंकार है। 'उत्तरोत्तरमुत्कर्षो भवेत् सारावधिः' । इसमें शिखरिणी छन्द है।

कर्म की महिमा—

**ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे**
**विष्णुर्येन दशावतारगहने क्षिप्तो महासंकटे ।**
**रुद्रो येन कपालपाणिपुटके भिक्षाटनं सेवते**
**सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥९३॥**

अन्वयः—येन (कर्मणा) ब्रह्मा ब्रह्माण्डभाण्डोदरे कुलालवत् नियमितः, येन विष्णुः दशावतारगहने महासंकटे क्षिप्तः; येन रुद्रः कपालपाणिपुटके भिक्षाटनम् सेवते, सूर्यः (च) नित्यम् एव गगने भ्राम्यति, तस्मै कर्मणे नमः ।

संस्कृत-व्याख्या—येन—कर्मणा, ब्रह्मा—विधाता, ब्रह्माण्डभाण्डोदरे—ब्रह्माण्डम् सम्पूर्णविश्वम् एव भाण्डम् पात्रम् तस्य उदरे अभ्यन्तरे, कुलालवत्—कुम्भ-

कार इव, नियमितः—नियोजितः, येन—कर्मणा, विष्णुः—पुरुषोत्तमः, दशावतारगहने—दशभिः अवतारैः गहनं विषमं तस्मिन्, महासंकटे—घोरकृच्छ्रे, क्षिप्तः—पातितः नियोजित इत्यर्थः, येन—कर्मणा, रुद्रः—शिवः, कपालपाणिपुटके—कपालं ब्रह्मशिरः एव पाणिपुटकम् तस्मिन्, भिक्षाटनं—भिक्षार्थभ्रमणं, सेवते—करोति, सूर्यः—आदित्यः (च) नित्यमेव—निरन्तरमेव, गगने—आकाशे, भ्राम्यति—अटति, तस्मै—सकलनियन्त्रे, कर्मणे—कार्यविशेषाय, नमः—नमस्कारोऽस्तु ।

अनुवाद—उस कर्म को नमस्कार है जिसने ब्रह्मा को ब्रह्माण्ड रूपी बर्तन को बनाने मे कुम्हार के जैसा नियुक्त किया, जिसने विष्णु को दश अवतार धारण करने के महासंकट में डाल दिया, जिसने शिव से नर-मुण्ड हाथ मे लेकर भीख मँगाई और जो सूर्य से नित्य आकाश में चक्कर लगवाता है ।

Salutation to that action, by whom Brahma was employed like a potter in the interior (lit. belly) of the pot-like mundane egg. (*i e* Universe); by whom Vishnu was thrown into a great fix, painful on account of ten incarnations; by whom Rudra was made to resort to begging Skull in hand; and (in obedience to whom) the sun constantly roams about in the sky.

संस्कृत-भावार्थ—कर्मवशादेव ब्रह्मा नियतरूपेण जगन्निर्माति, विष्णुः दशसु मत्स्याद्यवतारेषु कष्टं सहते, महेशः कपालजटितेन पाणिना भिक्षार्थं पर्यटति, सूर्योऽपि प्रत्यहं निरवकाशे वियति भ्रमणं करोति । एतेऽपि येन नियुक्ताः तस्मै सर्वनियन्त्रे कर्मणे नमोऽस्तु ।

टिप्पणी—(१) ब्रह्माण्डभाण्डोदरे—संसार रूपी बर्तन के अन्दर । ब्रह्माण्डम् एव भाण्डम् (मयूरव्यंसकादित्वात् रूपकरूप स०), तस्य उदरम् (ष० त०), तस्मिन् (२) कुलालवत्—कुम्हार की तरह । कुलालेन तुल्यः इति कुलाल+वति 'तेन तुल्यं क्रिया चेद्वतिः' इत्यनेन । ब्रह्मा संसार की सृष्टि करते हैं । मनुस्मृति के अनुसार जब ब्रह्मा को सृष्टि करने की इच्छा हुई तब उन्होंने सबसे पहले जल की सृष्टि की । उस जल में एक सोने का अंडा तैरने लगा । जब वह अंडा फूटा तो उससे ब्रह्मा निकले । उन्होने इस संसार की रचना की । (३) नियमितः—नियन्त्रित कर दिया है । नि√यम्+णिच्+क्त । (४) विष्णुः—

√विश्+नु (उणादि)। 'यस्मात् विश्वमिदं सर्वं तस्य शक्त्या महात्मनः। तस्मादेवोच्यते विष्णुः विशधातोः प्रवेशनात्' ॥ दुर्वासा ने विष्णु को शाप दिया था कि तुम दस बार पृथ्वी पर अवतीर्ण होगे—'यस्मात्ते जानतो धर्ममवध्या स्त्री निषूदिता। तस्मात्त्वं सप्तकृत्वेह मानुषेषूपपत्स्यते। ततस्तेनाभिशापेन नष्टे धर्मे पुनः पुनः। लोकस्य च हितार्थाय जायते मानुषेष्विह ॥' (मत्स्यपुराण १०,३०, ७। १०३—४)। (५) दशावतारगहने—दस अवतारों के कारण विषम या भयंकर। दस अवतार ये हैं—'मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः। रामो रामश्च कृष्णश्च बुद्धः कल्की च ते दश ॥' दश अवताराः (कर्म० स०), तैः गहनं विषमं कष्टकरं वा (तृ० त०)। यह 'महासंकटे' का विशेषण है। अथवा दशावताराः एव गहनम् अरण्यम् (मयूरव्यंसकादित्वात् रूपकरूप स०), तस्मिन्। इस पक्ष में यह विशेष्य होगा और 'महासंकटे' विशेषण। तब 'महासंकटे' का अर्थ होगा—भारी कष्टदायक। अव√तॄ+घञ् 'अवे तॄस्त्रोर्घञ्' इत्यनेन=अवतारः। वामन के मत से 'अवतर' शब्द शुद्ध है। अव√तॄ+अप् 'ऋदोरप्' इत्यनेन। 'अवतरावचयशब्दयोः दीर्घव्यत्यासो बालानाम्' इति वामनः। (६) महासंकटे—भारी संकट या विपत्ति में। महत् संकटम् (कर्म० स०), तस्मिन्। (७) रुद्रः—शिव। रोदयति असुरान् इति रुद्रः√रुद्+र (उणादि)। श्रुति कहती है—'सोऽरोदीत् यदरोदीत् तत् रुद्रस्य रुद्रत्वम्। (८) कपालपाणिपुटके—कपाल (खोपड़ी) को दोनों हाथों से थामकर। पाणिः एव पुटकम् (मयू० रूपकरूप स०) पुटक=पुड़िया, दोना। कपालसहितं पाणिपुटकम् (मध्य० स०), तस्मिन्। स्कन्द पुराण के अनुसार शंकर खोपड़ी हाथ में लेकर भिक्षा-याचना करते हैं। (९) कर्मणे—अत्र नमः शब्दयोगे 'नमः स्वस्तिस्वाहास्वधालंवषड्योगाच्च' इति सूत्रेण चतुर्थी।

इस श्लोक में शार्दूलविक्रीडित छन्द है।

सत्कर्म की स्पृहणीयता—

**या साधूंश्च खलान्करोति विदुषो मूर्खान्हितान्द्वेषिणः**
**प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात्।**
**तामाराधय सत्क्रियां भगवतीं भोक्तुं फलं वाञ्छितम्**
**हे साधो ! व्यसनैर्गुणेषु विपुलेष्वास्थां वृथा मा कृथाः ॥९४॥**

अन्वयः—या (सत्क्रिया) खलान् साधून् करोति मूर्खान् विदुषः, द्वेषिणः हितान्, परोक्षम् प्रत्यक्षम् कुरुते, हालाहलम् तत्क्षणात् अमृतम् कुरुते । हे साधो! वाञ्छितम् फलम् भोक्तुम् ताम् भगवतीम् सत्क्रियाम् आराधय । व्यसनैः विपुलेषु गुणेषु वृथा आस्थाम् मा कृथाः ।

संस्कृत-व्याख्या—या—सत्क्रिया, खलान्—दुर्जनान्, साधून्—सज्जनान्, करोति—विदधाति, मूर्खान्—अपण्डितान्, विदुषः—पण्डितान् (करोति), द्वेषिणः—शत्रून्, हितान्—सुहृदः (करोति), परोक्षम्—अतीन्द्रियं वस्तु, प्रत्यक्षम्—इन्द्रियगोचरं, कुरुते—विधत्ते, हालाहलं—विषम्, तत्क्षणात्—सद्यः एव, अमृतं—पीयूषं (कुरुते), हे साधो—हे सज्जन! वाञ्छितम्—अभीष्टं, फलं, भोक्तुं—साधयितुं, तां—प्रक्रान्तां, भगवती—सर्वशक्तिमती, सत्क्रिया—सत्कर्म, आराधय—पूजय । व्यसनैः—विपत्तिभिः, विपुलेषु—भूयिष्ठेषु, गुणेषु—विद्वत्तादिषु, वृथा—व्यर्थम्, आस्थां—विश्वासं, मा कृथाः—न कुरु ।

अनुवाद—जो सत्क्रिया दुष्ट को साधु, मूर्ख को विद्वान्, द्वेषियों को हितैषी, परोक्ष को प्रत्यक्ष और विष को तुरंत अमृत बना देती है, हे सज्जनवृन्द! अपने वाञ्छित फल को भोगने के लिये उसी भगवती सत्क्रिया की आराधना कीजिए, कठिनाइयों से भरे गुणों में अनुरात मत होइए ।

O goodman to enjoy your desired fruit, worship that goddess the virtuous action that changes the wicked into the good, fools into the learned, foes into friends, the thing past our senses into a thing comprehensible to senses and the deadly poison into nectar in an instant. Do not have vain attachment for others qualities full of difficulties.

संस्कृत-भावार्थ—सकलाभीष्टसिद्धिरभिलष्यते चेत् सत्कार्यकरणप्रक्रियाया अभ्यासो विधेयः, नश्वराणा गुणानामर्जने व्यर्थमेव प्रयासो न कर्त्तव्य. । यतो हि सैव सत्क्रिया सकलगुणानां खनिरित्यवधेयम् ।

टिप्पणी—(१) द्वेषिणः—शत्रुओं को । √द्विष्+णिनि कर्तरि । (२) हितान्—हितैषी । हितं प्रयोजनम् अस्ति एषाम् इति हिताः हित+अच्, तान् । 'हितान्न यः संशृणुते स किं प्रभुः' (किरा० १, ५) । (३) परोक्षम्—इन्द्रियो से ओझल पदार्थ को । अक्ष्णोः परम् इति परोक्षम् (अव्य० स०), समासान्त-

टच्प्रत्ययः, 'परोक्षे लिट्' इति पाणिनिसूत्रनिपातनात् ओत्वम् । (४) प्रत्यक्षम—इन्द्रियों के गोचर । अक्ष्णोः प्रति अभिमुखम् इति (अव्य० स०), 'प्रतिपरसमनुभ्योऽक्ष्णः' इत्यनेन समासान्तटच्प्रत्ययः । समास में अक्षि शब्द का अर्थ इन्द्रियमात्र हो जाता है—'वृत्तिविषये अक्षिशब्दः इन्द्रियमात्रपरः' इति तत्त्वबोधिनी । (५) हालाहलम्—विष । (६) व्यसनैः विपुलेषु—विपत्तियों से भरे हुए । (७) आस्थाम्—विश्वास या प्रयत्न । मा कृथाः—मत करो । √कृ+लुङ् ('माङि लुङ्' इत्यनेन)—थास्, 'न माङ्योगे' इत्यनेन अडागमनिषेधः ।

इस श्लोक में विशेष अलंकार और शार्दूलविक्रीडित छन्द है ।

**शुभ्रं सद्म सविभ्रमा युवतयः श्वेतातपत्रोज्ज्वला**
**लक्ष्मीरित्यनुभूयते चिरमनुस्यूते शुभे कर्मणि ।**
**विच्छिन्ने नितरामनङ्गकलहक्रीडात्रुटत्तन्तुकं**
**मुक्ताजालमिव प्रयाति झटिति भ्रश्यद्दिशो दृश्यताम् ॥९५॥**

अन्वयः—शुभे कर्मणि चिरम् अनुस्यूते (सति) शुभ्रम् सद्म, सविभ्रमाः युवतयः श्वेतातपत्रोज्ज्वला लक्ष्मीः इति (सर्वम्) अनुभूयते विच्छिन्ने (सति) नितराम् अनङ्गकलहक्रीडात्रुटत्तन्तुकम् मुक्ताजालम् इव भ्रश्यत् (सद्मादिकम्) झटिति दिशः प्रयाति इति दृश्यताम् ।

संस्कृत-व्याख्या—शुभे कर्मणि—सुकृते, चिरं—दीर्घकालम्, अनुस्यूते—संलग्ने अनुकूले सति इत्यर्थः, शुभ्रं सद्म—सौधं, सविभ्रमाः—सविलासाः, युवतयः—तरुण्यः, श्वेतातपत्रोज्ज्वलाः—श्वेतातपत्रेण श्वेतच्छत्रेण उज्ज्वला देदीप्यमाना, लक्ष्मीः—श्रीः, इति (सर्वम्), अनुभूयते—अनुभुज्यते, विच्छिन्ने—नष्टे शुभकर्मणि (तु), नितरां—सुतराम्, अनङ्गकलहक्रीडात्रुटत्तन्तुकम्—अनङ्गकलहः रतिरणः स एव क्रीडा केलिः तया हेतुना त्रुटन् तन्तुः यस्य तत् तथोक्तं, मुक्ताजालम्—मुक्ताहारः, इव—यथा, भ्रश्यत्—नश्यत्, (सद्मादिकं) झटिति—शीघ्रं, दिशः प्रयाति—अन्तर्हितं भवति, इति, दृश्यताम्—अवलोक्यताम् ।

अनुवाद—बढ़िया घर, विलासिनी युवतियाँ, श्वेत छत्र से चमचमाती हुई राजलक्ष्मी—ये सब तब तक ही भोगे जाते हैं जब तक (अपना किया) शुभ कर्म चलता रहता है । परन्तु देखो, जब यह (कर्म) विच्छिन्न हो जाता, घट

जाता है—तब ये सबके सब चारों दिशाओं में उसी तरह विलीन हो जाते हैं, जिस तरह रतिक्रीडा में टूट जाने से हार के मोती के दाने इधर-उधर बिखर जाते हैं।

When good luck continues long to be favourable (lit uninterrupted), a splendid mansion, amorous damsels and prosperity all bright with the white umbrella,—all this is enjoyed well, but when it is unfavourable (lit. snapped *i. e.* interrupted); behold all these vanish altogether in all directions like a necklace of pearls, whose string is broken in the sport of love-puarrel.

संस्कृत-भावार्थ—नरस्य पुण्ये कर्मणि अनुकूले सति तरुणीप्रासादलक्ष्म्यादिसकलभोगपदार्थाः करतलगतास्तिष्ठन्ति किन्तु नष्टे सति शुभकर्मणि त एव पदार्थाः तस्मान्नरात् तथैव दूरं प्रयान्ति यथा रतिक्रीडायां त्रुटितमुक्ताहारात् मुक्ताः इतस्ततो विकीर्यन्ते।

टिप्पणी—(१) शुभे कर्मणि—अच्छे कर्म के। भावे सप्तमी। पूर्वजन्मार्जित कर्म को भाग्य कहते हैं। 'पूर्वजन्मार्जितं कर्म तद्दैवमिति कथ्यते'। मनुष्य को पूर्वजन्मार्जित अच्छे कर्मों का फल सुख मिलता है और बुरे कर्मों का फल दुःख। (२) अनुस्यूते—संलग्न या अनुकूल रहने पर। अनु√सिव्+क्त। (३) सविभ्रमाः—विलास या हाव-भाव से युक्त। विभ्रमैः सह वर्तमानाः इति सविभ्रमाः (तुल्ययोगे ब० स०) 'वोपसर्जनस्य' इत्यनेन सहस्य सादेशः। (४) श्वेतातपत्रोज्ज्वला—श्वेत छत्र से उज्ज्वल। श्वेत छत्र राजचिह्न है। राजा लोग इसे धारण करते थे। श्वेतम् आतपत्रम् (कर्म० स०), तेन उज्ज्वला (तृ० त०)। (५) विच्छिन्ने—नष्ट होने पर। यह लुप्त 'शुभे कर्मणि' का विशेषण है। (६) अनङ्गकलहक्रीडात्रुटत्तन्तुकम्—रतिक्रीडा में टूटे हुए धागे वाला। अनङ्गकलह: प्रणयकलहः एव क्रीडा (मयूरव्यंसकादित्वात् रूपकरूप स०), तया त्रुटन् (तृ० त०), तादृशः तन्तुः यस्य तत् (ब० स०), 'शेषात् विभाषा' इति कप्।

इस श्लोक में उपमा अलंकार है।

अविचारपूर्वक किये गये कार्य का परिणाम—

गुणवदगुणवद्वा कुर्वता कर्मजातं
परिणतिरवधार्या यत्नतः पण्डितेन।

**अतिरभसकृतानां कर्मणामा विपत्ते-**
**र्भवति हृदयदाही शल्यतुल्यो विपाकः ॥९६॥**

अन्वय—गुणवत् अगुणवत् वा कर्मजातम् कुर्वता पण्डितेन परिणतिः यत्नतः अवधार्या। अतिरभसकृतानाम् कर्मणाम् विपाकः आ विपत्तेः शल्यतुल्यः हृदयदाही भवति।

संस्कृत-व्याख्या—गुणवत्—गुणयुक्तम्, वा—उत, अगुणवत्—गुणरहितम्, कर्मजातं—कार्यसमूहं, कुर्वता—विदधता, पण्डितेन—विदुषा, परिणतिः—परिणामः, यत्नतः—अतिप्रयत्नेन, अवधार्या—विचारणीया, अतिरभसकृतानाम्—अतिरभसेन सहसा कृतानाम् अनुष्ठितानां, कर्मणां—कार्याणां, विपाकः—परिणामः, आ विपत्तेः—मरणकालपर्यन्तं, शल्यतुल्यः—शल्येन बाणेन तुल्यः समानः, हृदयदाही—मनःसन्तापकारी, भवति—जायते।

अनुवाद—अच्छा या बुरा, जिस किसी काम को पण्डित लोग करें, उसका परिणाम वे पहले अच्छी तरह से सोच लें। जल्दबाजी में किये गये कामों का फल मरणपर्यन्त तीर के जैसा दिल में खटकता रहता है।

A wise man, doing all kinds of works, meritorious or immeritorious should carefully consider their consequence. The sequel of actions done in hot haste becomes poignant to the heart like a dart till death.

संस्कृत-भावार्थ—विदुषा समीचीनमसमीचीनं वा यत् किमपि क्रियते तद् विचार्यैव कर्तव्यम्, अन्यथा त्वरयाऽविचार्य कृतस्य कर्मणः फलमाजीवनं कष्टकरं भवति।

टिप्पणी—(१) गुणवत्—गुणों से युक्त। गुणाः सन्ति अस्मिन् इति गुण+मतुप्=गुणवत् 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' इत्यनेन मस्य वः। यह 'कर्मजातम्' का विशेषण है। (२) कर्मजातम्—कर्मसमूह या कार्यकलाप। कर्मणां जातम् (ष० त०)। (३) परिणतिः—फल। परि√नम्+क्तिन्। (४) यत्नतः—प्रयत्नपूर्वक। √यत्+नङ=यत्न+तस्। (५) अतिरभसकृतानाम्—अत्यन्त शीघ्रता में (बिना सोचे-समझे) किये गये। अतिरभसेन कृतानि (तृ० त०), तेषाम्। (६) विपाकः—परिणाम। वि√पच्+घञ्। 'अमैव जन्मान्तर-

पातकानां विपाकविस्फूर्जथुरप्रसह्यः' (रघुवंश १४, ६२)। (७) आ विपत्तेः—मरण पर्यन्त। यहाँ 'आङ्मर्यादाभिविध्योः' सूत्र से विकल्प से अव्ययीभाव समास होने के कारण जब समास नहीं हुआ तब का यह रूप है। अतएव 'आविपत्ति' और 'आ विपत्तेः' दोनों रूप होते हैं। जैसे—'आमुक्ति संसारः आ मुक्तेः' (सिद्धान्तकौमुदी) विपत्ति=मृत्यु। 'तस्यास्तथाविधनरेन्द्रविपत्तिशोकात्' (रघु० ८, ४१)। (८) शल्यतुल्यः—काँटे की तरह। शल्येन वा शल्यस्य तुल्यः (तृ० त० वा ष० त०)। (९) हृदयदाही—हृदय को सन्ताप देने वाला। हृदयं दग्धुं शीलं यस्य स हृदयदाही हृदय√दह+णिनि कर्तरि ताच्छील्ये।

इस श्लोक में मालिनी छन्द है। मालिनी का लक्षण—'ननमयययुतेयं मालिनी भोगिलोकैः'।

सत्कर्म से विमुख होना मूर्खता है—

**स्थाल्यां वैदूर्यमय्यां पचति तिलखलीं चान्दनैरिन्धनौघैः**
**सौवर्णैर्लाङ्गलाग्रैर्विलिखति वसुधामर्कतूलस्य हेतोः।**
**छित्त्वा कर्पूरखण्डान् वृतिमिह कुरुते कोद्रवाणां समन्ता-**
**त्प्राप्येमां कर्मभूमिं न चरति मनुजो यस्तपो मन्दभाग्यः॥९७॥**

अन्वय—यः मन्दभाग्यः मनुजः इमाम् कर्मभूमिम् प्राप्य तपः न चरति स वैदूर्यमय्याम् स्थाल्याम् चान्दनैः इन्धनौघैः तिलखलीम् पचति, अर्कतूलस्य हेतोः सौवर्णैः लाङ्गलाग्रैः वसुधाम् विलिखति, कर्पूरखण्डान् छित्त्वा कोद्रवाणाम् समन्तात् इह वृतिम् कुरुते।

संस्कृत-व्याख्या—यः, मन्दभाग्यः—हतदैवः प्रारब्धहीन इति यावत्, मनुजः मानवः, इमां—प्रत्यक्षां, कर्मभूमिं—कर्माचरणयोग्यभूमिं, प्राप्य—लब्ध्वा, तपः—तपस्यां, न चरति—न करोति, सः—मनुजः, वैदूर्यमय्यां—वैदूर्यमणिनिर्मितायां, स्थाल्यां—पात्रे, चान्दनैः—चन्दनतरुसम्बन्धिभिः, इन्धनौघैः—काष्ठराशिभिः, तिलखलीं—तिलपिष्टं, पचति—विक्लेदयति, अर्कतूलस्य हेतोः—अर्कवृक्षस्य तूलार्थं, सौवर्णैः—सुवर्णरचितैः, लाङ्गलाग्रैः—हलमुखैः, वसुधां—भुवम्, विलिखति—कर्षति, कर्पूरखण्डान्—घनसारवृक्षसमूहान्, छित्त्वा—कर्तित्वा, कोद्रवाणां—कोरदूषाणाम् (अन्नानाम्), समन्तात्—चतुर्दिक्षु, इह—संसारे, वृतिम्—आवरणं, कुरुते—सम्पादयति।

अनुवाद—जो अभागा इस कर्मभूमि में आकर तपस्या नहीं करता वह चन्दन की लकड़ी जलाकर, मरकत मणि की वटलोही में तिल की खली पकाता है, आक की रुई उपजाने के लिये सोने के फाल से पृथ्वी को जोतता है; तथा कपूर वृक्ष को काट काट-कर कोदो के खेत में चारों ओर घेरा लगाता है।

That unlucky fellow who does not practise penance on coming to this world of action, cooks, with sandal fuel, the oil-cake of sesamum in a kettle made of Vaiduryagems, ploughs the earth with golden plough, shares for the sake of cotton of the Arka plants, cuts down the camphor trees and makes a fence of them round the Kodo-crop.

संस्कृत-भावार्थ—बहुमूल्ये वैडूर्यमणिमये पात्रे चन्दनकाष्ठं प्रज्वाल्य तिल-पिण्याकसदृशक्षुद्रपदार्थस्य पाचनम्, अर्कतूलसदृशक्षुद्रवस्तुप्राप्त्यर्थं स्वर्णनिर्मितहलाग्रेण भूमिकर्षणं तथा कर्पूरवृक्षसमूहान् कर्पूरकन्दलीकाण्डान् वा छित्त्वा कोद्रव-संरक्षणार्थं वृतिकरणं यथातिमूर्खत्वं सूचयति तथैवेह कर्मभूमौ जन्म प्राप्य मानवस्य सत्कर्माननुष्ठानमभाग्यत्वसूचकमेव भवति।

टिप्पणी—(१) वैडूर्यमय्याम्—वैडूर्यमणि की। विदूरात् प्रभवति वा विदूरे पर्वते भवम् इति वैडूर्यम् विदूर+ञ्य 'विदूराञ्ञ्यः' इत्यनेन। 'वैडूर्यं बालवायजम्' इत्यमरः। वैडूर्याणां विकारः इति वैडूर्य+मयट्+ङीप्=वैडूर्यमयी, तस्याम्। अधिकरणे सप्तमी। (२) स्थाल्याम्—वटलोई में। (३) चान्दनैः—चन्दन की। चन्दनस्य अयम् इति चन्दन+अण्। यह 'इन्धनौघैः' का विशेषण है। (४) इन्धनौघैः—लकडियों के ढेर। इन्धनानाम् ओघाः समूहाः इति इन्धनौघाः (ष० त०), तैः। करणे तृतीया। (५) तिलखलीम्—तिल की खली को। (६) अर्कतूलस्य—आक की रुई के लिए। अर्कस्य तूलम् (ष० त०) 'षष्ठी हेतुप्रयोगे' इत्यनेन। (७) सौवर्णैः—सोने के। सुवर्णस्य विकारः इति सुवर्ण+अण्। (८) लाङ्गलाग्रैः—हल की फाल से। लाङ्गलानाम् अग्राणि (ष० त०), तैः करणे तृतीया। (९) कर्पूरखण्डान्—कर्पूर के वृक्षों के समूहों या डालों को। कर्पूराणां खण्डाः (ष० त०), तान्। (१०) कोद्रवाणाम्—कोदों का। कोदो सांवां की जाति का एक मोटा अन्न है। 'कोरदूषस्तु कोद्रवः' इत्यमरः। (११) वृतिम्—बाड़ या घेरा। √वृ+क्तिन्।

इस श्लोक में मालानिदर्शना अलंकार है और स्रग्धरा छन्द है। स्रग्धरा का लक्षण—'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयम्'।

भाग्य ही फल देता है—

**नैवाकृतिः फलति नैव कुलं न शीलं**
**विद्यापि नैव न च यत्नकृतापि सेवा।**
**भाग्यानि पूर्वतपसा खलु संचितानि**
**काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥९८॥**

अन्वयः—आकृतिः न एव फलति, कुलम् न एव, शीलं न, विद्या अपि न एव, यत्नकृता सेवा अपि च न, पूर्वतपसा संचितानि पुरुषस्य भाग्यानि वृक्षाः यथा काले एव फलन्ति।

संस्कृत-व्याख्या—आकृतिः—स्वरूपं, नैव, फलति—फलदायिनी भवति कुलं—वंशः, नैव (फलति), शीलं—सद्वृत्तं, न (फलति), विद्या—चतुर्दशविद्या अपि, नैव (फलति), यत्नकृता—प्रयासविहिता, सेवा अपि—परिचर्या अपि च, न (फलति), पूर्वतपसा—पुराकृतसुकृतेन, संचितानि—संगृहीतानि, पुरुषस्य—नरस्य, भाग्यानि—भागधेयानि, वृक्षाः—तरवः, यथा—इव, काले एव—समये एव, फलन्ति—फलं ददति।

अनुवाद—सुन्दर आकृति नही फलती, न कुल और न शील; न विद्या फलती और न यत्नपूर्वक की गई सेवा ही। जैसे वृक्ष के फल फलते, उसी तरह पूर्व की तपस्या से सञ्चित किये हुए मनुष्य के कर्म, जिन्हें भाग्य कहते हैं, समय पाकर फल धारण करते हैं।

A handsome form does not bear fruit, neither does grace nor character, nor even learning, nor service assiduously done. Fate, acquired by man, by means of his previous penance (in his former birth), bears fruit in time as do the trees.

संस्कृत-भावार्थ—यदि पूर्वसुकृतार्जितानि भाग्यानि न सन्ति तर्हि सुस्वरूपेण, कुलेन, शीलेन, विद्यया, सेवया च नरः न किमपि लब्धुं शक्नोति, भाग्यानि सन्ति चेत् तदा यथा स्वसमये वृक्षाः फलैः शोभन्ते तथा मनुजोऽपि धनादिभिर्युज्यते। तपोजनितभाग्यव्यतिरिक्तं फलजनकं न किञ्चिदस्तीति तात्पर्यम्।

**टिप्पणी**—(१) विद्या—वेद आदि चौदह विद्यायें। 'अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश॥' विदन्ति अनया इति विद्या√विद्+क्यप्+टाप्। (२) यत्नकृता—प्रयत्नपूर्वक की हुई। यत्नेन कृता (तृ० त०)। (३) सेवा—चाकरी। √सेव्+अ 'गुरोश्च हलः' इत्यनेन, ततष्टाप्। (४) पूर्वतपसा—पूर्व जन्म की तपस्या द्वारा। पूर्वं तपः (कर्म० स०), तेन। करणे तृतीया। 'पूर्वजन्मकृतं कर्म तदेव भाग्यमुच्यते'। (५) यथा—जैसे। 'इववत् वा यथाशब्दौ' इति दण्डिपादाः।

इस श्लोक के प्रथम दो चरणों में दीपक अलंकार है और 'वृक्षाः यथा' में उपमा अलंकार है। इसमें वसन्ततिलका छन्द है।

अनहोनी होती नहीं और होनी टलती नहीं—

मज्जत्वम्भसि यातु मेरुशिखरं शत्रूञ्जयत्वाहवे
वाणिज्यं कृषिसेवने च सकला विद्याः कलाः शिक्षताम्।
आकाशं विपुलं प्रयातु खगवत्कृत्वा प्रयत्नं परं
नाभाव्यं भवतीह कर्मवशगो भाव्यस्य नाशः कुतः॥६६॥

अन्वयः—अम्भसि मज्जतु मेरुशिखरम् यातु आहवे शत्रून् जयतु, वाणिज्यम् कृषिसेवने सकलाः विद्याः कलाः च शिक्षताम्, परम् प्रयत्नम् कृत्वा खगवत् विपुलम् आकाशम् प्रयातु (तथापि) कर्मवशतः अभाव्यम् इह न भवति, भाव्यस्य कुतः नाशः?

संस्कृत-व्याख्या—अम्भसि—जले, मज्जतु—मग्नो भवतु, मेरुशिखरं—सुमेरोरग्रभागं, यातु—गच्छतु, आहवे—संग्रामे, शत्रून्—रिपून्, जयतु—पराजितान् करोतु, वाणिज्यं—क्रयविक्रयादिकं, कृषिसेवने—कृषिं क्षेत्रकर्षणं सेवनं भृतिं च, सकलाः—समस्ताः, विद्याः—वेदवेदाङ्गादीः, कलाः—चतुःषष्टिकलाः, च, शिक्षताम्—अभ्यस्यतु, परम्—उत्कृष्टम्, प्रयत्नम्—उद्यमं, कृत्वा—विधाय, खगवत्—पक्षिवत्, विपुलम्—अनन्तम्, आकाशं—गगनम्, प्रयातु—गच्छतु, (तथापि) कर्मवशतः—कर्मानुरोधात्, अभाव्यम्—अभावि, इह—अत्रलोके, न भवति—न जायते, भाव्यस्य—अवश्यम्भाविनः, कुतः—केन प्रकारेण, नाशः—अभावः (स्यात्)?

अनुवाद—चाहे जल में डूबे, चाहे मेरु शिखर पर चढ़ जाय, चाहे संग्राम में शत्रु को जीत ले, चाहे वाणिज्य करे, खेती-चाकरी करे, सब कला और सब विद्या सीखे, बहुत प्रयत्न करके आकाश में चिड़ियों के ऐसा उड़े; चाहे जो करे, पर जो होने वाला नहीं, वह कभी नहीं होगा और जो होनेवाला है वह अवश्य होगा, उसका नाश नहीं हो सकता, वह कभी नहीं रुक सकता।

A man may dive into water, ascend the peak of the Meru Mountain, conquer foes in battle, may learn trade, agriculture, service, and all other arts and sciences, may fly like a bird with great effort through the vast sky: still that, which is not fated to happen shall never happen; how can that be destroyed which is destined to happen in this world (*i. e.* that which is to happen, must happen).

संस्कृत-भावार्थ—मानवः जले निमज्जतु, सुमेरुपर्वतशिखरमारोहतु, शत्रून् जयतु, सकलाः समस्ताः विद्याः अभ्यस्यतु, पादुकासिद्धयादिकं कृत्वा पक्षिवत् आकाशे विहरतु अर्थात् साध्यमसाध्यं वा प्रयत्नं विदधातु, किन्तु कर्मवशात् यद् भाव्यं तदवश्यमेव भविष्यति यच्चाभाव्यं तत् कथमपि न भविष्यति 'यदभावि न तद्भावि भावि चेन्न तदन्यथा' इति न्यायात्।

टिप्पणी—(१) अम्भसि—जल में। अम्भस् शब्द के रूप अम्भः, अम्भसी, अम्भांसि। (२) मज्जतु—डूबे। अर्थात् मोती पाने के लिए समुद्र में गोता लगावे। (३) मेरुशिखरम्—सुमेरु पर्वत की चोटी पर। अर्थात् सोना लाने के लिए सुमेरु पर्वत की चोटी पर चला जाय। (४) आहवे—युद्ध में। आहूयन्ते अन्यः अस्मिन् इति आहवः आ√ह्वे+अप् 'आङि युद्धे' इत्यनेन संप्रसारणम्। (५) वाणिज्यम्—व्यापार। वणिजो भावः कर्म वा वाणिज्यम् वणिज्+ष्यञ्। (६) कृषिसेवने—खेती और नौकरी। कृषिश्च सेवनं च इति कृषिसेवने (द्व० स०)। √कृष्+इन्=कृषिः। (७) विद्याः—चार या चौदह प्रकार की विद्याओं को। 'आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती' इति कामन्दकः। अंगानि वेदाश्चत्वारो मीमांसान्यायविस्तरः। पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश॥' (८) कलाः—गीत, वाद्य, नृत्य आदि चौंसठ कलाओं को। (९) कर्मवशतः—प्रारब्ध के अनुसार। कर्मणः वशः (ष० त०), तस्मात्, कर्मवश+तस्। (१०) भाव्यम—जो होना है। √भू+ण्यत्।

इस श्लोक में शार्दूलविक्रीडित छन्द है ।

पूर्वजन्मार्जित सुकर्मों से सर्वत्र अनुकूलता प्राप्त होती है—

**भीमं वनं भवति तस्य पुरं प्रधानं**
**सर्वो जनः स्वजनतामुपयाति तस्य ।**
**कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा**
**यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥१००॥**

अन्वयः—यस्य विपुलम् पूर्वसुकृतम् अस्ति, तस्य भीमम् वनम् प्रधानम् पुरम् भवति, सर्वः जनः तस्य स्वजनताम् उपयाति, कृत्स्ना च भूः (तस्य) सन्निधिरत्नपूर्णा भवति ।

संस्कृत-व्याख्या—यस्य—नरस्य, विपुलं—बहुलं, पूर्वसुकृतं—पुराकृतसत्कर्मजातम्, अस्ति—विद्यते, तस्य—नरस्य, भीमं—भयङ्करं, वनं—काननम्, प्रधानं—मुख्यम्, पुरम्—नगरम्, भवति—जायते, सर्वः—सकलः, जनः—लोकः, तस्य, स्वजनताम्—आत्मीयताम्, उपयाति—गच्छति, कृत्स्ना—सम्पूर्णा, च, भूः—पृथ्वी, (तस्य) सन्निधिरत्नपूर्णा—शोभनैः निधिरत्नैः निधिभिः पद्मशङ्खादिभिः रत्नैः हीरकवैदूर्यादिभिश्च पूर्णा सम्पन्ना भवति ।

अनुवाद—जिस मनुष्य ने पूर्व जन्म में बहुत पुण्य जमा कर रखा है, उसके लिये भयङ्कर वन अच्छा नगर हो जाता है, सब लोग उसके अपने आत्मीय हो जाते हैं, सारी पृथ्वी उसके लिये रत्नों से परिपूर्ण हो जाती है ।

To a man, having immense merit acquired in previous life (lit. previously), a terrible forest becomes a capital city, all people become his own men (friendly to him). and the whole earth becomes full of good gems and fine treasures.

संस्कृत-भावार्थ—येन पूर्वं बहुलानि सुकृतानि कृतानि तेषां फलरूपतया तेन सर्वत्रैव समृद्धिर्लभ्यते, सर्वोऽपि जनस्तस्यानुकूलो भवति, स यत्र कुत्रापि गच्छतु तत्र सुखमेव भवति; अतः श्रेयस्कामैः प्रचुरः पुण्यसंचयः कार्यः ।

टिप्पणी—(१) विपुलम्—प्रचुर (२) पूर्वसुकृतम्—पूर्व जन्म का पुण्य । पूर्वं सुकृतम् (कर्म० स०) । (३) भीमम्—भयानक । बिभेति अस्मात् इति √भी+मक् (उणादि)=भीमम् । तात्पर्य यह है कि भाग्यशाली पुरुष भयंकर

वन में भी नगर के सभी सुखों को प्राप्त कर लेता है। (४) स्वजनताम् उपयाति —आत्मीयता को प्राप्त होते हैं। स्वस्य जनाः (ष० त०) वा स्वे जनाः (कर्म० स०), तेषां भावः स्वजन+तल्+टाप्, ताम्। अर्थात् सभी लोग उस (भाग्यशाली) से मित्र-कुटुम्ब की भाँति व्यवहार करते हैं। (५) कृत्स्ना— सम्पूर्ण। √कृन्+क्स्न (उणादि)+टाप्। (६) सन्निधिरत्नपूर्णा—उत्तम निधियों और रत्नों से भरी। निधयः च रत्नानि च इति निधिरत्नानि (द्व० स०), शोभनानि च तानि निधिरत्नानि इति सन्निधिरत्नानि (कर्म० स०), तैः परिपूर्णा (तृ० त०)।

इस श्लोक में वसन्ततिलका छन्द है।

पूर्व सुकृत ही रक्षा करते हैं—

> वने रणे शत्रुजलाग्निमध्ये
> महार्णवे पर्वतमस्तके वा।
> सुप्तं प्रमत्तं विषमस्थितं वा
> रक्षन्ति पुण्यानि पुराकृतानि ॥१०१॥

**अन्वयः**—वने रणे शत्रुजलाग्निमध्ये महार्णवे पर्वतमस्तके, वा सुप्तं प्रमत्तं विषमस्थितं वा पुराकृतानि पुण्यानि रक्षन्ति।

**संस्कृत-व्याख्या**—वने—अरण्ये, रणे—संग्रामे, शत्रुजलाग्निमध्ये—शत्रवः रिपवः जलं पानीयम् अग्निः वह्निः च तेषां मध्ये अन्तरे, महार्णवे—महासमुद्रे, पर्वतमस्तके वा—गिरिशिखरे वा, सुप्तं—निद्रितं, प्रमत्तम्—असावधानं, विषमस्थितं वा—निम्नोन्नतभागे विपत्तौ च स्थितं वा, पुराकृतानि—पूर्वजन्मसम्पादितानि, पुण्यानि—सुकृतानि, रक्षन्ति—पालयन्ति।

**अनुवाद**—रण में, वन में, शत्रुओं के बीच में, जल में, अग्नि में, महासमुद्र में या पर्वत-शिखर पर, चाहे सोया हो या उन्मत्तावस्था में हो, कैसी ही विषम स्थिति में मनुष्य क्यों न हो, परन्तु पूर्व-कृत पुण्य उसको उस हालत में भी रक्षा करते हैं।

Merits acquired in previous life protect man in a forest, in a battle, in the midst of enemy; water and fire or in a big ocean or on the top of a mountain whether he be asleep, intoxicated or placed in danger.

संस्कृत-भावार्थ—वनादिषु भीषणेषु स्थानेषु स्वप्नादिमोहमयावस्थायां च जीवनसंरक्षाया पुरुषाणां पूर्वपुण्यैर्विना न काऽप्यन्यनोऽस्ति ।

टिप्पणी—(१) शत्रुजलाग्निमध्ये—शत्रु, जल या अग्नि के बीच । शत्रव: च जलं च अग्नि: च इति शत्रुजलाग्नय: (द्व० स०), तेषां मध्ये (ष० त०) । (२) महार्णवे—घोर समुद्र में । अर्णांसि जलानि सन्ति अस्मिन् इति अर्णव: अर्णस्+व मनुवर्ये । महान् अर्णव: (कर्म० स०), तस्मिन् । यहाँ सभी सप्तम्यन्त पद में अधिकरणे सप्तमी है । (३) पर्वतमस्तके—पर्वत की चोटी पर । पर्वतस्य मस्तकम् (ष० त०), तस्मिन् । (४) विषमस्थितम्—ऊँचे-नीचे स्थान में या भययुक्त स्थान में पड़े को । विषमे स्थितम् (स० त०) । विषमे=सभयस्थाने इति शंकराचार्य: (गीता २,२ पर शांकर भाष्य) । (५) पुराकृतानि—पूर्व जन्म में किये हुए । पुरा कृतानि (सुप्सुपा स०) । इससे भी सिद्ध होता है कि भर्तृहरि बौद्ध नहीं थे । क्योंकि बौद्ध लोग पूर्वजन्म में विश्वास नहीं करते हैं ।

इस श्लोक में उपजाति छन्द है ।

# परिशिष्ट

[नीतिशतक की विभिन्न प्रतियों में उपलब्ध होने वाले विविध विषयक श्लोक ]

महान् शत्रु और उत्कृष्ट बन्धु—

**आलस्यं हि मनुष्याणां शरीरस्थो महारिपुः ।**
**नास्त्युद्यमसमो बन्धुः कृत्वा यं नावसीदति ॥१॥**

अन्वय:—हि आलस्यं मनुष्याणां शरीरस्थ: महान् रिपु:, उद्यमसम: बन्धु: न, यं कृत्वा न अवसीदति ।

संस्कृत-व्याख्या—हि—निश्चयेन, आलस्यं—कार्येषु प्रवृत्त्यभाव:, मनुष्याणां—मानवानां, शरीरस्थ:—देहस्थित:, महारिपु:—परम: शत्रु: (अस्ति), उद्यमसम:—उद्योगतुल्य:, बन्धु:—बान्धव:, न (अस्ति), यम्—उद्यमं, कृत्वा—विधाय, (नर:) न अवसीदति—न दु:खं प्राप्नोति ।

अनुवाद—आलस्य मनुष्य के देह में रहने वाला बड़ा भारी शत्रु है । उद्यम के समान मित्र नहीं, उद्यम करने से मनुष्य कभी दु:ख नहीं उठाता, कभी निराश नहीं होता ॥१॥

Idleness is a great enemy dwelling in the body of a man. There is no friend like diligence, doing which a man does not suffer (lit. perish).

**संस्कृत-भावार्थ**—कार्यविघातकं शत्रुम् इव आलस्यं दूरीकृत्य कार्यसाधकं मित्रमिवोद्योगं कुर्यान्मानवः । किमपि कार्यं कुर्वतश्च नूनं तत्सिद्धेराशा, अकुर्वतस्तु तस्याः सिद्धेः प्रसक्तिरेव नास्ति । अतः आलस्यं विहाय सदा सोद्योगेन भाव्यम् ।

**टिप्पणी**—(१) **आलस्यम्**—कार्य न करने की प्रवृत्ति, अकर्मण्यता । अलसस्य भावः आलस्यम् अलस+ष्यञ् । (२) **शरीरस्थः**—देह में स्थित । शरीरे तिष्ठतीति शरीर √स्था+क । (३) **उद्यमसमः**—उद्योग के समान । उद्यमेन समः (तृ० त०) । न **अवसीदति**—कष्ट नहीं पाता है । अव √सद्+लट्—तिप्, 'पाघ्राध्मास्था'—इत्यादिसूत्रेण सदः सीदादेशः ।

इसमें अनुष्टुप् छन्द है ।

वीर की महिमा—

**एकेनापि हि शूरेण पादाक्रान्तं महीतलम् ।**
**क्रियते भास्करेणेव स्फारस्फुरिततेजसा ॥२॥**

**अन्वयः**—महीतलम् एकेन अपि शूरेण पादाक्रान्तं क्रियते स्फारस्फुरिततेजसा भास्करेण इव ।

**संस्कृत-व्याख्या**—महीतलं—भूतलम्, एकेनापि—अद्वितीयेनापि, शूरेण—वीरेण, पादाक्रान्तं—पादैः चरणैः (सूर्यपक्षे किरणैः) धर्षितं (सूर्यपक्षे व्याप्तं) क्रियते—विधीयते, स्फारस्फुरिततेजसा—स्फारं विस्तीर्णं स्फुरितं देदीप्यमानं तेजः ओजः यस्य तादृशेन, भास्करेण—सूर्येण, इव—यथा ।

**अनुवाद**—सारा महीतल एक ही वीर से पादाक्रान्त होता है, जिस तरह से अति ज्वल्यमान, अति चमकीले एक ही सूर्य की किरणों से सारा संसार आक्रान्त हो जाता है ।

The entire surface of the earth is trodden under feet by a single handed hero. Just as the world is overflooded with rays by the sun of the profusely glittering light.

**संस्कृत-भावार्थ**—यथा प्रखरतेजस्वी सूर्यः एकोऽपि निखिलं जगत् स्वकिरणैः व्याप्तं करोति तथैवैकोऽपि शूरः स्वविक्रमेण सकलं जगदाक्रान्तं करोति।

**टिप्पणी**—(१) महीतलम्—पृथ्वीतल। मह्याः तलम् (ष० त०)। (२) पादाक्रान्तं क्रियते—(शूर-पक्ष में) पैर तले दबाया जाता है। (सूर्य-पक्ष में) किरणों से व्याप्त किया जाता है। पादैः आक्रान्तम् (तृ० त०)। (३) स्फार-स्फुरिततेजसा—अत्यन्त चमकते हुए तेज वाले। स्फारं यथा स्यात् तथा स्फुरितं तेजो यस्य सः (ब० स०), तेन। (४) भास्करेण—सूर्य। भाः करोतीति भास्करः भाः√कृ+ट 'दिवाविभानिशा'—इत्यादिसूत्रेण, 'कस्कादिषु च' इत्यनेन विसर्गस्य सत्वम्।

इस श्लोक में अनुष्टुप् छन्द है।

मुंह भरकर सबको वशीभूत किया जा सकता है—

**को न याति वशं लोके मुखे पिण्डेन पूरितः।**
**मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥३॥**

**अन्वयः**—लोके मुखे पिण्डेन पूरितः कः वशं न याति? मृदङ्गः मुखलेपेन मधुरध्वनिं करोति।

**संस्कृत-व्याख्या**—लोके—संसारे, मुखे—वदने, पिण्डेन—मिष्टान्नादिमधुर-पदार्थेन, पूरितः—संभृतः, कः—जनः, वशम्—अधीनतां, न याति—न गच्छति? मृदङ्गः—मुरजः, मुखलेपेन—मुखे लेपकरणेन, मधुरध्वनिं—मधुरशब्दं, करोति—विदधाति।

**अनुवाद**—जब किसी का मुंह (पिण्ड से, कुछ खिला-पिला कर) भर दिया जाता है तब कौन मनुष्य वश में नहीं आ जाता? जब मृदङ्ग के मुंह पर (सूर पर) आटा लेप कर बोहन लगा दिया जाता है तो वह बहुत मीठी आवाज करता है।

Who does not submit in the world when his mouth is filled with a ball of rice (*i. e.* when bribed)? A Mridanga makes sweet sound when its face is coated with dough (kneaded flour).

**संस्कृत-भावार्थ**—यथा मृदङ्गस्य मुखे लेपकरणेन तस्य ध्वनिः अतीव मधुरो भवति तथैव मिष्टान्नादिपदार्थभोजनेन नरः प्रसन्नः अनुकूलश्च भवति।

टिप्पणी—(१) पिण्डेन—मिष्टान्न आदि मधुर पदार्थों से। (२) मुखलेपेन—मुंह पर लेप करने से। मुखे लेपः (स० त०), तेन। (३) मधुरध्वनिम्—मीठी आवाज। मधुरः ध्वनिः (कर्म० म०), तम्।

इस श्लोक में अनुष्टुप् छन्द है।

अपनी प्रतिष्ठा के अनुकूल ही वस्तु की कामना करनी चाहिए—

**यदि नाम दैवगत्या जगदसरोजं कदाचिदपि जातम्।**
**अवकरनिकरं विकिरति तत्किं कृकवाकुरिव हंसः ॥४॥**

अन्वयः—यदि दैवगत्या जगत् कदाचित् असरोजम् अपि जातं नाम, तत् किं हंसः कृकवाकुः इव अवकरनिकरं विकिरति ?

संस्कृत-व्याख्या—यदि—चेत्, दैवगत्या—संयोगवशात्, जगत्—संसारः, कदाचित्, असरोजं—कमलविहीनम्, अपि, जातं नाम—भवेत्, तत्—तदा, किं, हंसः—मरालः, कृकवाकुः—कुक्कुटः, इव—यथा, अवकरनिकरम्—अवकरस्य गलितमांसस्य निकरं राशिं, विकिरति—उत्खनति खादति वा ?

अनुवाद—यदि संयोगवश संसार कमलविहीन हो जाय तो क्या हंस, मुरगे के जैसा, कूड़े के ढेर को खरोंचेगा ?

If perchance, the world ever becomes devoid of lotuses, would the swan then scratch a heap of sweeping like a cock ?

संस्कृत-भावार्थ—उत्तमो नरः स्वगौरवानुरूपमेव वस्तु कामयते। ईदृशं किमपि वस्तु स कदाचिदपि नाङ्गीकरोति येन तस्य प्रतिष्ठा विनश्येत्। हंसः कमलं खादति। किन्तु यदि कदाचित् स तत् न लभेत तदा किं तदभावे मांसं खादिष्यति ? अपि सः मृतो भवेत् किन्तु मांसं कदापि न खादिष्यति।

टिप्पणी—(१) दैवगत्या—संयोग से। दैवस्य गतिः (ष० त०), तया। (२) असरोजम्—कमल से रहित। नास्ति सरोजं यत्र तत् (न० ब० स०)। (३) अपि—यह संभावनार्थक अव्यय है। 'निन्दासमुच्चयप्रश्नशङ्कासंभावनास्वपि' इत्यमरः। (४) कृकवाकुः—मुरगा। 'कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः' इत्यमरः। (५) अवकरनिकरम्—कूड़े के ढेर को। अवकीर्यते सम्मार्जन्यादिभिः इति अवकरः अव√कॄ+अप्। नि√कृ+अच् वा अप्=निकरः।

अवकरस्य निकरः (ष० त०), तम् । (६) विकिरति—खरोंचता है या बिखेरता है । वि√कृ (तुदादि)+लट्—तिप्, इत्व।

इस श्लोक में आर्या छन्द है ।

आश्रय एक का ही करना चाहिए—

एको देवः केशवो वा शिवो वा
ह्येकं मित्रं भूपतिर्वा यतिर्वा
एको वासः पत्तने वा वने वा
एका नारी सुन्दरी वा दरी वा ।।५।।

अन्वयः—एको देवः केशवो वा शिवो वा, एकं मित्रं भूपतिर्वा यतिर्वा, एको वासः पत्तने वा वने वा, एका नारी सुन्दरी वा दरी वा ।

संस्कृत-व्याख्या—एकः—केवलः, देवः—देवता, केशवः—विष्णुः, वा—अथवा, शिवः—शङ्करः, वा, एकं—केवलं, मित्रं—सुहृत्, भूपतिः—राजा, वा—अथवा, यतिः—संन्यासी, वा, एकः, वासः—निवासस्थानं, पत्तने—नगरे, वा, वने—अरण्ये, वा, एका—केवला, नारी—स्त्री, सुन्दरी—रूपवती, वा, दरी—गुहा, वा ।

अनुवाद—हम एक ही देव, कृष्ण या शिव की उपासना करें, हमें एक ही मित्र मिले—राजा या यति; एक ही वास मिले, नगर में या वन में और एक ही स्त्री हो—सुन्दरी या गुहा ।

Let us have one and only one god Kesava or Shiva, only one friend—the king or a hermit; only one abode—in the city or in a forest; one and only one beautiful wife or a cave.

संस्कृत-भावार्थ—मनसः द्वौ भावौ भवतः अनुरक्तिर्विरक्तिश्च । तत्रानुरक्तौ सत्यां देवेषु विष्णुः सेव्यः, भूपतिर्मित्रं कर्तव्यम्, नगरे वासः कर्तव्यः, सुन्दरी रमणी सेव्या । विरक्तौ सत्यां तु महादेवो देवः, यतिर्मित्रं, वने वासः, गुहारूपा स्त्री सेव्या । तदैव कल्याणं भवति ।

टिप्पणी—(१) एकोदेवः—देवता एक (आराधनीय है) । (२) केशवो वा शिवो वा—या तो विष्णु अथवा शिव । (३) यतिः—योगी, संन्यासी ।

(४) पत्तने—नगर, शहर में। (५) दरी—गुफा। 'दरी तु कन्दरो वा स्त्री देवखातविले गुहा' इत्यमरः।

इस श्लोक में शालिनी छन्द है। शालिनी का लक्षण—'मात्तौ गौ चेच्छालिनी वेदलोकैः'।

सत्पुरुषों की बातें कल्याणकारी होती हैं—

**परिचरितव्याः सन्तः यद्यपि कथयन्ति नो सदुपदेशम् ।**
**यास्त्वेषां स्वैरकथास्ता एव भवन्ति शास्त्राणि ॥६॥**

अन्वयः—यद्यपि सन्तः सदुपदेशं नो कथयन्ति तथापि ते परिचरितव्याः। एषां या तु स्वैरकथाः ताः एव शास्त्राणि भवन्ति।

संस्कृत-व्याख्या—यद्यपि, सन्तः—सत्पुरुषाः, सदुपदेशं—शोभनां शिक्षां, नो—नहि, कथयन्ति—वदन्ति, तथापि, ते—सन्तः, परिचरितव्याः—सेवितव्याः, एषां—सत्पुरुषाणां, याः, तु, स्वैरकथाः—स्वेच्छया मुखात् निर्गताः वार्ताः, ताः, एव, शास्त्राणि, भवन्ति—जायन्ते।

अनुवाद—यद्यपि सन्त जन उपदेश न भी दें तो भी उनकी सेवा करनी चाहिए। उनके मुंह से जब कुछ बातें निकल पड़ती हैं वे ही शास्त्र हैं अर्थात् शास्त्रोक्त बातें हैं।

Goodmen should be waited upon though they do not give good advice. For what are their random talks. become scriptures, (*i. e.* the teaching of the scriptures).

संस्कृत-भावार्थ—सज्जनानां सम्पर्के निवसन् तेषां शुश्रूषां च कुर्वन् नरः सदैव कल्याणं लभते। सज्जनाः उपदिशेयुः न वा उपदिशेयुः, तेषां मुखात् स्वेच्छया यानि वचांसि निःसरन्ति तानि शास्त्रवचनानीव कल्याणकराणि भवन्ति।

टिप्पणी—(१) सदुपदेशम्—अच्छी सीख। उप√दिश्+घञ् भावे=उपदेशः, सन् उपदेशः सदुपदेशः (कर्म० स०), तम्। (२) परिचरितव्याः—सेवा-शुश्रूषा करने योग्य। परि√चर्+तव्यत्। (३) स्वैरकथाः—स्वेच्छा पूर्वक की गई या मुंह से निकली हुई बातें। ईरणम् ईरः√ईर्+घञ्, स्वस्य ईरः (ष० त०), 'स्वादीरेरिणोः' इति वार्तिकेन वृद्धिसन्धिः, स्वैर+अच् टाप्=स्वैरा। स्वैराः कथाः स्वैरकथाः (कर्म० स०)।

इस श्लोक में आर्या छन्द है ।

शील सब का आभूषण है—

**वचो हि सत्यं परमं विभूषणं लज्जाङ्गनायाः कृशता कटौ च।**
**द्विजस्य विद्यैव पुनस्तथा क्षमा शीलं हि सर्वस्य नरस्य भूषणम्**
**॥७॥**

अन्वयः—सत्यं वचः हि परमं विभूषणम् (अस्ति), लज्जा अङ्गनायाः, कृशता कटौ च, विद्या तथा क्षमा एव पुनः द्विजस्य, शीलं हि सर्वस्य नरस्य भूषणम् (अस्ति) ।

संस्कृत-व्याख्या—सत्यं—यथार्थं, वचः—वचनं, हि, परमं—महत्, विभूषणम्—आभूषणम् (अस्ति), लज्जा—त्रपा, अङ्गनायाः—नार्याः (आभूषणम्), कृशता—क्षीणता, कटौ—मध्यभागे (आभूषणम्), विद्या—वेदादिज्ञानम्, तथा—एवम्, क्षमा—सहनशीलता, एव, पुनः, द्विजस्य—ब्राह्मणस्य (आभूषणम्), शीलं—सदाचारः, हि, सर्वस्य—समस्य, नरस्य—मानवस्य, भूषणम्—आभूषणम् (अस्ति) ।

अनुवाद—सत्य वचन मनुष्य का बड़ा भारी भूषण है, लज्जा स्त्री का, पतलापन कमर का, विद्या और क्षमा भी द्विजों का; सच्चरित्र तो सभी मनुष्यों का आभूषण है ।

True speech is the greatest ornament (for man), bashfulness for a woman slenderness for the waist, learning alone for the twice-born and forgiveness too, in addition. Good conduct is the ornament for all men.

संस्कृत-भावार्थ—संसारे बहुविधानि आभूषणानि सन्ति । कतिचित् केवलं नारीणां कृते सन्ति, कतिचित् केवलं पुरुषाणां कृते सन्ति । एवमेव कानिचिद् आभूषणानि विदुषाम् अन्यानि च तदितरेषां सन्ति । ईदृशं किमपि आभूषणं नास्ति यत् सर्वसामान्यं स्यात् । केवलं शीलमेव ईदृशम् आभूषणम् अस्ति यत् सर्वेषामपि शोभां समानरूपेण वर्धयति । पुरुषः स्यात् नारी वा स्यात्, नहि कमपि भेदं पश्यति । अतः सर्वैरपि सदाचारः रक्षणीयः ।

टिप्पणी—(१) विभूषणम्—अलंकार या शोभा । वि√भूष्+ल्युट् । (२) लज्जा—√लज्ज्+अङ्+टाप् । (३) अङ्गनायाः—नारी का । प्रशस्तानि अङ्गानि यस्याः सा अङ्गना अङ्ग+न+टाप्, तस्याः । (४) कृशता—पतलापन । √कृश्+क्त=कृशः अनुपसर्गात् 'फुल्लक्षीबकृशोल्लाघाः' इति सूत्रेण निपातनात् सिद्धिः । कृशस्य भावः कृशता कृश+तल्+टाप् ।

इस श्लोक में उपजाति छन्द है ।

नारी में बहुत-से दुर्गुण होते हैं—

**अग्राह्यं हृदयं यथैव वदनं यद्दर्पणान्तर्गतं**
**भावः पर्वतसूक्ष्ममार्गविषमः स्त्रीणां न विज्ञायते ।**
**चित्तं पुष्करपत्रतोयतरलं विद्वद्भिराशंसितं**
**नारी नाम विषांकुरैरिव लता दोषैः समं वर्धिता ।।८।।**

अन्वयः—दर्पणान्तर्गतं वदनं यथैव अग्राह्यम् (तथैव) स्त्रीणां यत् हृदयं (तदपि अग्राह्यम्), पर्वतसूक्ष्ममार्गविषमः भावः न विज्ञायते, चित्तं विद्वद्भिः पुष्करपत्रतोयतरलम् आशंसितम्, नारी विषाङ्कुरैः लता इव दोषैः समं वर्धिता नाम ।

संस्कृत-व्याख्या—दर्पणान्तर्गतं—प्रतिबिम्बितं, वदनं—मुखं, यथैव, अग्राह्यं ग्रहीतुं योग्यं न, (भवति तथैव) स्त्रीणां—नारीणां, यत्, हृदयं—चित्तं, (तदपि अग्राह्यं भवति), पर्वतसूक्ष्ममार्गविषमः—पर्वतीयसूक्ष्ममार्ग इव विषमः दुर्ज्ञेयः, भावः—आन्तरिकः मनोरथः, न विज्ञायते—ज्ञातुं न शक्यते, चित्तं—चेतः, विद्वद्भिः—पण्डितैः, पुष्करपत्रतोयतरलं—पुष्करस्य कमलस्य पत्रं दलं तस्मिन् स्थितं तोयं जलं तदिव तरलं चञ्चलम्, आशंसितं—कथितम्, नारी—स्त्री, विषाङ्कुरैः—विषस्य गरलस्य अंकुराणि कन्दल्यः तैः, लता इव—वल्ली इव, दोषैः—दुर्गुणैः, समं—साकं, वर्धिता—वृद्धिं गता, नाम ।

अनुवाद—जिस तरह दर्पण में प्रतिबिम्बित चेहरे को पकड़ना कठिन है उसी तरह से स्त्रियों के हृदय को भी जानना कठिन है । उनके अन्तःकरण का भाव जानना उतना ही कठिन है जितना पहाड़ पर की पतली राह का पता लगाना ।

उनका चित्त तो विद्वानों द्वारा ऐसा चञ्चल बताया गया है जैसा जल-कण कमल के पत्ते पर चञ्चल रहता है। सचमुच स्त्री दोषों के साथ-साथ बढ़ती हुई उसी तरह भयानक है जिस तरह विषैले अंकुरों के साथ बढ़ती हुई लता होती है।

Like the face reflected in a mirror, the heart of women can not be caught (understood); their feeling (of love), difficult like a narrow track on a mountain cannot be known. Their mind has been described by the learned as fickle like water on a lotus-leaf; a woman, growing with faults, is really like a creeper, growing with its poisonous sprouts.

संस्कृत-भावार्थ—नार्या बहवो दोषा भवन्ति, दोषैरेव सह सा जन्म गृह्णाति, तैरेव समं सा वर्धते, तैरेव समं सा म्रियते। तस्याः मनः चञ्चलम्, भावः दुर्ज्ञेयः, हृदयञ्च अग्राह्यं भवति। विषलता इव सा केवलम् अनर्थाय एव भवति नहि कल्याणाय।

टिप्पणी—(१) दर्पणान्तर्गतम्—शीशे के भीतर प्रविष्ट, दर्पण में प्रतिबिम्बित। दर्पणस्य अन्तर्गतम् (ष० त०)। (२) अग्राह्यम्—जो पकड़ में न आये। √ग्रह्+ण्यत्=ग्राह्यम्, न ग्राह्यम् अग्राह्यम् (न० त०)। (३) पर्वतसूक्ष्ममार्गविषमः—पर्वतीय सूक्ष्म मार्ग की तरह जिसका पता पाना कठिन है। सूक्ष्मः मार्गः (कर्म० स०), पर्वतस्य सूक्ष्ममार्गः (ष० त०), स इव विषमः (उपमित स०)। (४) पुष्करपत्रतोयतरलम्—कमल के पत्ते पर पड़े हुए जल की तरह चंचल। पुष्करस्य पत्रम् (ष० त०), तस्मिन् स्थितं तोयम् (मध्य० स०) तदिव तरलम् (उपमित स०)। (५) आशंसितम्—कहा। आ√शंस्+क्त कर्मणि। (६) दोषैः—दुर्गुणों के साथ।

इस श्लोक में शार्दूलविक्रीडित छन्द है।

परोपकारी ही सत्पुरुष है—

क्षुद्राः सन्ति सहस्रशः स्वभरणव्यापारमात्रोद्यताः<br>
स्वार्थो यस्य परार्थ एव स पुमानेकः सतामग्रणीः।<br>
दुष्पूरोदरपूरणाय पिबति स्रोतः पतिं वाडवो<br>
जीमूतस्तु निदाघसंभृतजगत्संतापविच्छित्तये ॥६॥

अन्वयः—सहस्रशः क्षुद्राः सन्ति (ये) स्वभरणव्यापारमात्रोद्यताः, परार्थः एव यस्य स्वार्थः सः एकः पुमान् सताम् अग्रणीः, वाडवः दुष्पूरोदरपूरणाय स्रोतःपतिम् पिबति, जीमूतस्तु निदाघसंभृतजगत्सन्तापविच्छित्तये (भवति) ।

संस्कृत-व्याख्या—सहस्रशः—अनेके, क्षुद्राः—अधमाः, सन्ति—विद्यन्ते, (ये) स्वभरणव्यापारमात्रोद्यताः—केवलं स्वपोषणकार्ये एव संलग्नाः (सन्ति) । परार्थः—परहितम्, एव, यस्य—नरस्य, स्वार्थः—स्वहितं, सः—असौ, एकः—एकाकी, पुमान्—पुरुषः, सतां—सज्जनानाम्, अग्रणीः—अग्रगण्यः (अस्ति) । वाडवः—वाडवाग्निः, दुष्पूरोदरपूरणाय—दुष्पूरः दुःखेन पूरयितुं योग्यः उदरः जठरः तस्य पूरणाय पूर्तये, स्रोतःपतिं—समुद्रं, पिबति—शोषयति । जीमूतस्तु—मेघः तु, निदाघसंभृतजगत्संतापविच्छित्तये—निदाघेन ग्रीष्मेण सम्भृतं सन्तप्तं यत् जगत् संसारः तस्य सन्तापः अत्युष्णता तस्य विच्छित्तये विनाशाय (भवति) ।

अनुवाद—हजारों नीच पुरुष हैं जो अपने ही भरण-पोषण में व्यस्त रहते हैं, जो पराये हित को अपना हित समझता है वही एक पुरुष सज्जनों में अग्रगण्य है। वड़वानल अपने कभी नहीं भरने वाले पेट को भरने के लिये नदीपति समुद्र को सोख जाता है, पर मेघ ग्रीष्म के ताप से संतप्त संसार की गरमी को कम करने के वास्ते समुद्र को सोखता है—उससे जल खींच कर वृष्टि करता है ।

There are thousands and thousands of mean-minded fellows busy in supporting themselves. He alone is the foremost among the good who considers other's interests as his own; the submarine fire (वड़वानल) drinks the sea, the lord of streams, to fill its own insatiate maw, but the cloud, (draws water from the ocean) to allay the heat of the world caused by the hot summer.

संस्कृत-भावार्थ—संसारे स्वपोषणकार्ये एव संलग्नाः बहवो जनाः वर्तन्ते, किन्तु सत्पुरुषाः त एव ये परहितभावने निरताः सन्ति । सागरस्य जलं वाडवोऽपि पिबति मेघोऽपि । तत्र मेघः वर्षति, वर्षणेन संसारतापं दूरीकरोति, किन्तु वाडवाग्निः सागरस्य जलमादाय न कस्यापि उपकारं करोति ।

टिप्पणी—(१) सहस्रशः—हजारों । सहस्र+शस् । शस् प्रत्ययान्त शब्द अव्यय हो जाता है। अतएव यह अव्यय है । (२) **स्वभरणव्यापारमात्रोद्यताः**

—अपने भरण-पोषण के कार्य में लगे हुए। स्वस्य भरणम्, तस्य व्यापारः (ष० त०), स एव इति स्वभरणव्यापारमात्रम् (मयूरव्यंसकादित्वात् समासः), तस्मिन् उद्यताः (स० त०)। (३) परार्थः—दूसरे का हित। परेषाम् अर्थः (ष० त०)। (४) दुष्पूरोदरपूरणाय—कभी न भरने वाले पेट को भरने के लिए। दुःखेन पूरयितुं शक्यः दुष्पूरः दुस्√पूर्+खल्। दुष्पूरः उदरः (कर्म० स०), तस्य पूरणम् (ष० त०), तस्मै। (५) जीमूतः—मेघ। 'घनजीमूतमुदिरजलमुग्धूमयोनयः' इत्यमरः। (६) निदाघसंभृतजगत्संतापविच्छित्तये—ग्रीष्म ऋतु के ताप से संतप्त संसार के ताप को मिटाने के लिए। निदाघेन संभृतम् (तृ० त०), तादृशं जगत् (कर्म० स०), तस्य संतापः, तस्य विच्छित्तिः (ष० त०), तस्यै।

इस श्लोक में शार्दूलविक्रीडित छन्द है।

सज्जन स्वीकृत वस्तु का अन्त तक निर्वाह करते हैं—

**किं कूर्मस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्**
**किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः।**
**किन्त्वङ्गीकृतमुत्सृजन्स्वमनसा श्लाघ्यो जनो लज्जते**
**निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥१०॥**

अन्वयः—यत् एषः क्ष्मा न क्षिपति तत् किं कूर्मस्य वपुषि भरव्यथा न (भवति), यत् निश्चलः न आस्ते तत् किं दिनपतेः परिश्रमः नास्ति, किन्तु श्लाघ्यः जनः अङ्गीकृतम् उत्सृजन् लज्जते, हि प्रतिपन्नवस्तुषु निर्वाहः, एतत् सतां गोत्रव्रतम्।

संस्कृत-व्याख्या—यत्, एषः—अयं कूर्मावतारो विष्णुः, क्ष्मां—पृथ्वीं, न क्षिपति—स्वपृष्ठात् न प्रक्षिपति, तत् किं, कूर्मस्य—कच्छपस्य, वपुषि—शरीरे, भरव्यथा—भरस्य भारस्य व्यथा पीडा, न (भवति), यत् निश्चलः—अचलः, न आस्ते—न तिष्ठति, तत्, किं, दिनपतेः—सूर्यस्य, परिश्रमः—श्रान्तिः, नास्ति—न भवति, किन्तु—परन्तु, श्लाघ्यः—प्रशंसनीयः, जनः—लोकः, अङ्गीकृतं—स्वीकृतं, उत्सृजन्—त्यजन्, लज्जते—जिह्रेति, हि—यतः, प्रतिपन्नवस्तुषु—स्वीकृतपदार्थेषु, निर्वाहः—निर्वहणम्, एतत्, सतां—सज्जनानां, गोत्रव्रतम्—कुलव्रतम् (अस्ति)।

**अनुवाद**—कच्छप-देव जो पृथ्वी को अपनी पीठ पर से अलग नहीं फेंक देते सो क्या बोझ के मारे उनकी देह में पीड़ा नहीं होती ? सूर्य जो कभी निश्चल हो खड़ा नहीं हो जाते सो क्या उनको कभी थकावट नहीं होती ? सो बात नहीं। बात यह है कि प्रशंसनीय पुरुष अपनी अंगीकृत वस्तुओं को छोड़ने में मन में लजाते हैं; क्योंकि स्वीकृत कामों का अन्त तक निर्वाह करना सज्जनों का कुलव्रत है।

Does the tortoise not feel pain of burden over his body, that he does not throw off the earth, or does not the lord of the day, the sun feel fatigue that he never becomes motionless ! But a praiseworthy man feels ashamed in his mind when going to give up his undertaking; for carrying on to finish things once undertaken is the hereditary vow of the good.

**संस्कृत-भावार्थ**—सज्जनाः यत् स्वीकुर्वन्ति, तदन्तं यावत् परिपालयन्ति। समागतेष्वपि बहुविधेषु संकटेषु ते तन्न त्यजन्ति। जगतः प्रकाशनं सकृत् स्वीकृत्य निरन्तरं भ्रमणेन श्रान्तोऽपि दिनकरः तन्न त्यजति। एवमेव पृथिव्याः भारं सकृत् स्वपृष्ठोपरि धृत्वा कूर्मः भाराधिक्येन नितरां पीडितोऽपि स्वकर्तव्यमार्गात् लेशमात्रमपि न विचलति।

**टिप्पणी**—(१) **भरव्यथाम्**—भार के कष्ट को। भरस्य व्यथा (ष० त०), ताम्। (२) **श्लाघ्यः**—प्रशंसनीय। श्लाघितुं योग्यः श्लाघ्यः√श्लाघ्+ण्यत्। (३) **उत्सृजन्**—छोड़ता हुआ। उद्√सृज्+लट्—शतृ। (४) **प्रतिपन्नवस्तुषु**—स्वीकृत वस्तुओं का। प्रति√पद्+क्त कर्मणि=प्रतिपन्न। प्रतिपन्नानि वस्तूनि इति प्रतिपन्नवस्तूनि (कर्म० स०), तेषु। अत्र विषयाधिकरणे सप्तमी। (५) **निर्वाहः**—निवाहना। निर्√वह्+घञ्। (६) **गोत्रव्रतम्**—कुलव्रत।

इस श्लोक में शार्दूलविक्रीडित छन्द है।

मनुष्य रूप में पशु—

येषां न विद्या न तपो न दानं
ज्ञानं न शीलं न गुणो न धर्मः।
ते मर्त्यलोके भुवि भारभूता
मनुष्यरूपेण मृगाश्चरन्ति ॥११॥

अन्वयः—येषां विद्या न, तपो न, दानं न, शीलं न, गुणो न, धर्मः न, ते मर्त्यलोके भुवि भारभूताः (सन्तः) मनुष्यरूपेण मृगाः चरन्ति ।

संस्कृत-व्याख्या—येषां—नराणां, विद्या—वेदादिशास्त्राणां ज्ञानं, न—नहि (विद्यते), तपः—तपस्या, न, दानं—सत्पात्रेषु द्रव्यादिवितरणं, न, शीलं—सद्वृत्तं, न, गुणः—दयादाक्षिण्यादि, न, धर्मः—सुकृतं, न, ते—नराः, मर्त्यलोके—मानवलोके, भुवि—पृथिव्या, भारभूताः—भारस्वरूपाः, (सन्तः) मनुष्यरूपेण—मानवरूपेण, मृगाः—पशवः, चरन्ति—इतस्ततो गच्छन्ति ।

अनुवाद—जिनको न विद्या, न तप, न दान, न ज्ञान, न शील, न गुण और न धर्म है, वे मर्त्यलोक में बोझ हैं, मनुष्य के रूप में पशु चरते हैं।

Those who do not possess learning, penance; charity, knowledge, character, merit or righteousness, roam in this world like beasts in the form of men; a sheer burden to this earth.

संस्कृत-भावार्थ—विद्यातपोदानादिविहीनाः मानवाः पशुतुल्याः सन्ति ।

टिप्पणी—(१) मर्त्यलोके—मनुष्य-लोक में । म्रियन्तेऽत्रेति मर्तो भूलोकस्तत्र भवः मर्त्यः अथवा म्रियते इति√मृ+तन्+यत् स्वार्थे । मर्त्यानां लोकः मर्त्यलोकः, तस्मिन् । (२) भारभूताः—भारस्वरूप । भारेण भूताः तुल्याः इति भारभूताः (सुप्सुपा स०) ।

इस श्लोक में उपजाति छन्द है ।

मूर्खों का संसर्ग त्याज्य है—

**वरं पर्वतदुर्गेषु भ्रान्तं वनचरैः सह ।**
**न मूर्खजनसंपर्कः सुरेन्द्रभवनेष्वपि ॥१२॥**

अन्वयः—वनचरैः सह पर्वतदुर्गेषु भ्रान्तं वरं सुरेन्द्रभवनेषु अपि मूर्खजनसम्पर्कः न (वरम्) ।

संस्कृत-व्याख्या—वनचरैः—वनवासिभिः जनैः, सह—साकं, पर्वतदुर्गेषु—पर्वताः गिरयः दुर्गाणि दुर्गमस्थानानि तेषु, भ्रान्तं—भ्रमणं, वरं—मनाक्प्रियम्, (किन्तु) सुरेन्द्रभवनेषु अपि—देवेन्द्रप्रासादेषु अपि, मूर्खजनसम्पर्कः—दुष्टजनसंसर्गः, न (वरम्) ।

अनुवाद—वनचरों के साथ पर्वतों पर तथा दुर्गम स्थानों में विचरण करना अच्छा है परन्तु मूर्खों के साथ सुरेन्द्र के भवन में भी रहना अच्छा नहीं है।

Better to wander in the fortresses of hills along with the foresters than to dwell in the company of fools in the palaces of the Lord of gods (*i. e.* Indra)

संस्कृत-भावार्थ—पर्वतेषु दुर्गमस्थानेषु च वनचरैः सह वासः कथञ्चिच्छ्रेष्ठः, किन्तु मूर्खैः सह वासः इन्द्रभवनेष्वपि अवाञ्छनीय एव।

टिप्पणी—(१) वनचरैः—वन में घूमने वाले (कोल, भीलों) के साथ। वने चरन्तीति वनचराः वने√चर्+ट, उपपद स०। यहाँ 'वनचर' का अर्थ वन में घूमने वाला प्राणी है न कि वनचर जाति। संज्ञा अर्थ में सप्तमी विभक्ति का अलुक् हो जाएगा। तब 'वनेचरैः' प्रयोग होगा। जैसा कि 'किरातार्जुनीयम्' के प्रथम श्लोक में आया है—'युधिष्ठिरं द्वैतवने वनेचरः'। (२) मूर्खजनसम्पर्कः—मूर्खों का साथ। मूर्खाः एव जनाः (मयूरव्यंसकादित्वात् रूपकरूप स०), तैः सम्पर्कः (सुप्सुपा स०)। सम्√पृच्+घञ्=सम्पर्कः।

इस श्लोक में अनुष्टुप छन्द है।

भगवत्कृपा का फल—

**सूनुः सच्चरितः सती प्रियतमा स्वामी प्रसादोन्मुखः**
**स्निग्धं मित्रमवञ्चकः परिजनो निष्क्लेशलेशं मनः।**
**आकारो रुचिरः, स्थिरश्च विभवो विद्यावदातं मुखं**
**तुष्टे विष्टपहारिणीष्टदहरौ संप्राप्यते देहिना ॥१३॥**

अन्वयः—विष्टपहारिणीष्टदहरौ तुष्टे देहिना सच्चरितः सूनुः, सती प्रियतमा, प्रसादोन्मुखः स्वामी, स्निग्धं मित्रम्, अवञ्चकः परिजनः, निष्क्लेशलेशं मनः, रुचिरः आकारः, स्थिरः विभवः, विद्यावदातं मुखं सम्प्राप्यते।

संस्कृत-व्याख्या—विष्टपहारिणीष्टदहरौ—विष्टपं जगत् हर्तुं सन्तोषयितुं शीलम् अस्य इति तस्मिन्, इष्टदहरौ—वाञ्छितफलदातरि विष्णौ, तुष्टे—प्रसन्ने (सति), देहिना—मनुष्येण, सच्चरितः—सदाचरणशीलः, सूनुः—पुत्रः, सती—पतिव्रता, प्रियतमा—पत्नी, प्रसादोन्मुखः—सदा प्रसादकर्ता वा प्रसन्नतायां रतः, स्वामी—प्रभुः, स्निग्धं—स्नेहशीलं, मित्रं—सुहृत्, अवञ्चकः—छलरहितः,

परिजनः—परिवारः सेवको वा, निष्क्लेशलेशं—निर्गतः क्लेशलेशः यस्मात् तादृशम् अत्यन्तं दुःखरहितमिति यावत्, मनः—चित्तं, रुचिरः—मनोज्ञः, आकारः—आकृतिः, स्थिरः—स्थायी, विभवः—समृद्धिः, विद्यावदातं—विद्यया ज्ञानेन अवदातं स्वच्छं शुद्धं वा, मुखं—वदनं, सम्प्राप्यते—सम्यक् लभ्यते ।

अनुवाद—सच्चरित पुत्र, सती साध्वी प्रियतमा, प्रसन्न रहने वाला स्वामी, स्नेही मित्र, नहीं ठगने वाला नौकर, चिन्ता-रहित मन, सुन्दर आकृति, चिरस्थायी संपत्ति, विद्या से देदीप्यमान मुख यह सब मनुष्य तभी पाता है जब संसार को संतुष्ट करने वाले, सब कामनाओं को पूरा करने वाले हरि प्रसन्न होते हैं ।

A well-behaved son, a chaste and loving wife: a master ready to favour, an affectionate friend; undeceitful servant; the mind free from the least worry, a handsome form, everabiding prosperity, a face glowing with learning, all these can be obtained by a man if Lord Hari, who fulfils desires (of all) and pleases the world is well propitiated.

संस्कृत-भावार्थ—जगद्धातरि विष्णौ प्रसन्ने सत्येव नरः सदाचारिणं पुत्रं, पतिव्रतां पत्नीं, कृपालुं स्वामिनं, स्नेहशीलं मित्रं, निश्छलं सेवकं, क्लेशरहितं चित्तं, रुचिरामाकृतिं, स्थिरं धनं, ज्ञानभास्वरं मुखं च प्राप्नोति ।

टिप्पणी—(१) विष्टपहारिणि—संसार का वहन करने वाले । विष्टपं हर्तुं शीलं यस्य स विष्टपहारी विष्टप√हृ+णिनि कर्त्तरि ताच्छील्ये, तस्मिन् । (२) इष्टदहरौ—अभीष्टदायक विष्णु के । इष्टं ददातीति इष्टदः इष्ट√दा+क । इष्टदः हरिः इष्टदहरिः (कर्म० स०), तस्मिन् । (३) देहिना—मनुष्य के द्वारा । देहः अस्ति अस्य इति देही देह+इनि, तेन । (४) सच्चरितः—अच्छे चरित्र वाला । सत् चरितं यस्य स सच्चरितः (ब० स०) । (५) प्रसादोन्मुखः—प्रसन्नता व्यक्त करने के लिए उन्मुख या तत्पर । उद्गतं मुखं यस्य स उन्मुखः (ब० स०), प्रसादस्य उन्मुखः प्रसादोन्मुखः (ष० त०) । (६) अवञ्चकः—धोखा न देने वाला । (७) परिजनः—सेवक । (८) निष्क्लेशलेशम्—जिसमें किसी प्रकार का क्लेश न हो, शान्त । निःशेषेण गतः रागद्वेषादिजन्यस्य संसारोत्पन्नस्य वा क्लेशस्य लेशो यस्मात् तत्, निर्गतः क्लेशलेशः यस्मात् तत् (प्रा० ब० स०) । (९) विद्यावदातम्—ज्ञान से निर्मल । विद्यया अवदातम् (तृ० त०) ।

इस श्लोक में शार्दूलविक्रीडित छन्द है ।

धन की महिमा—

तानीन्द्रियाणि सकलानि तदेव कर्म
सा बुद्धिरप्रतिहता वचनं तदेव ।
अर्थोष्मणा विरहितः पुरुषः स एव
त्वन्यः क्षणेन भवतीति विचित्रमेतत् ॥१४॥

अन्वय:—सकलानि इन्द्रियाणि तानि एव, कर्म तत् एव, अप्रतिहता सा बुद्धिः, तदेव वचनं तु अर्थोष्मणा विरहितः (सन्) स एव पुरुषः क्षणेन अन्यः भवति इति विचित्रम् (अस्ति) ।

संस्कृत-व्याख्या—सकलानि—समस्तानि, इन्द्रियाणि—करणानि, तानि—प्रसिद्धानि, एव, कर्म—क्रिया, तत् एव—पूर्ववत् एव, अप्रतिहता—अकुण्ठिता. सा—पूर्ववत्, बुद्धिः—प्रज्ञा, तदेव—पूर्ववदेव, वचनं—वाणी, तु—किन्तु, अर्थोष्मणा—अर्थस्य धनस्य ऊष्मणा उष्णतया, विरहितः—हीनः, (सन्) स एव—पूर्वोक्त एव, पुरुषः—नरः, क्षणेन—निमिषमात्रेण, अन्यः—भिन्नः, भवति—जायते, इति एतत्—पूर्वोक्तं सर्वमपि, विचित्रम्—आश्चर्यकरम् (अस्ति) ।

अनुवाद—सब इन्द्रियाँ वही, कर्म वही, अप्रतिहत बुद्धि भी वही, और वचन भी वही रहता है तो भी धन की गर्मी से रहित होने पर वही मनुष्य क्षण भर में ही दूसरा बन जाता है । कैसी विचित्र बात है ।

The senses are the same; the action the same, the same is the unobstructed intellect, the speech also is the same, and yet the self same man, devoid of the warmth of wealth, strange it is, becomes instantly a changed being.

संस्कृत-भावार्थ—इन्द्रियादिषु यथापूर्वं वर्तमानेष्वपि यदि पार्श्वे धनं नास्ति चेत् तर्हि मनुष्यो विचित्रामेव काञ्चिद्दशामनुभवति । तस्मात् पुरुषेण धनमवश्यं सम्पादनीयम् ।

टिप्पणी—(१) सकलानि—सभी । (२) इन्द्रियाणि—इन्द्रियाँ दस हैं, जिनमें पाँच ज्ञानेन्द्रियाँ हैं—'श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका चैव पञ्चमी' । पाँच कर्मेन्द्रियाँ हैं—'पायूपस्थं हस्तपादं वाक् चैव दशमी स्मृता' । मन ग्यारहवीं

इन्द्रिय है । इन्द्र+घ 'इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा' इति सूत्रेण, घस्य इयादेशः । वामन ने इस प्रकार समझाया है—'इन्द्रस्य लिङ्गमिन्द्रियम् । इन्द्र आत्मा स चक्षुरादिना करणेनानुमीयते । नाकर्तृकं करणमस्ति, इन्द्रेण सृष्टमात्मना सृष्टम् । तत्कृते शुभाशुभकर्मणोत्पन्नमिति कृत्वा । इन्द्रेण जुष्टमात्मना सेवितम् । तद्द्वारेण विज्ञानोत्पादनात् । इन्द्रेण दत्तमात्मना विषयेभ्यो यथायथं ग्रहणाय' । (३) अप्रतिहता—कुंठित न होने वाली । प्रति √हन्+क्त+टाप्, (न० त०) । (४) अर्घोष्मणा विरहितः—घन की गर्मी से रहित ।

इसमें वसन्ततिलका छन्द है ।

महान् व्यक्ति प्रार्थना की प्रतीक्षा नहीं करते—

**त्वमेव चातकाधारोऽसीति केषां न गोचरः ।**
**किमम्भोदवरास्माकं कार्पण्योक्ति प्रतीक्षसे ॥१५॥**

अन्वयः—अम्भोदवर ! त्वम् एव चातकाधारः असि इति केषां न गोचरः ? अस्माकं कार्पण्योक्ति किं प्रतीक्षसे ?

संस्कृत-व्याख्या—अम्भोदवर !—हे मेघश्रेष्ठ !, त्वम् एव—भवानेव, चातकाधारः—चातकानां सारङ्गाणाम् आधारः आश्रयभूतः, असि—वर्तसे, इति—एवं, केषां—जनानां न गोचरः—नहि ज्ञातम् ? (अतः) अस्माकं—नः, कार्पण्योक्ति—दीनतामयीं वाणीं, किं प्रतीक्षसे—कथं श्रोतुमिच्छसीत्यर्थः ?

अनुवाद—हे मेघवर ! कौन नहीं जानता कि तुम चातकों के आधार हो, चातकों को पोसने वाले हो ? तब क्यों तुम हमारी करुण प्रार्थना की प्रतीक्षा करते हो ?

O excellent cloud who does not know that you are the supporter of the Chataka-birds ? Why do you then wait for our pathetic appeal ?

संस्कृत-व्याख्या—जगज्जानाति यत् चातको मेघवृष्टमेव जलं पिबति इति, पुनः मेघेन तत्प्रार्थनायाः प्रतीक्षा किं करणीया ? आश्रयदातृभिः आश्रितानां दीनवचनं कदापि न श्रोतुमभिलषणीयम्, अपि तु सत्वरं तेषामभीष्टं पूरणीयम् ।

टिप्पणी—(१) अम्भोदवर—हे मेघश्रेष्ठ अम्भः ददतीति अम्भोदाः अम्भस् √दा+क, तेषु वरः (स० त०), तत्सम्बुद्धौ । (२) चातकाधारः—पपीहों का अवलम्ब । चातकानाम् आधारः (ष० त०) । (३) केषां न गोचरः—कौन नहीं जानते । (४) कार्पण्योक्तिम्—दीनता से भरी हुई वाणी । कृपणस्य भावः कार्पण्यम् कृपण+ष्यञ्, कार्पण्यपूर्णा उक्तिः (मध्य० स०), ताम् ।

इसमें अनुष्टुप् छन्द है ।

जिस किसी के सामने दीनता प्रकट करना उचित नहीं—

**रे रे चातक ! सावधानमनसा मित्र ! क्षणं श्रूयता-**
**मम्भोदा बहवो हि सन्ति गगने सर्वेऽपि नैतादृशाः ।**
**केचिद्वृष्टिभिरार्द्रयन्ति वसुधां गर्जन्ति केचिद्वृथा**
**यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः ॥१६॥**

अन्वयः—रे रे मित्र चातक ! सावधानमनसा क्षणं श्रूयताम्, गगने हि बहवः अम्भोदाः सन्ति, सर्वे अपि एतादृशाः न, केचिद् वृष्टिभिः वसुधाम् आर्द्रयन्ति, केचिद् वृथा गर्जन्ति, यं यं पश्यसि तस्य तस्य पुरतः दीनं वचः मा ब्रूहि ।

संस्कृत-व्याख्या—रे रे मित्र चातक—अयि सखे सारङ्ग !, सावधानमनसा—स्वस्थचित्तेन, क्षणं—क्षणमात्रं यावत्, श्रूयताम्—आकर्ण्यताम्, गगने हि—आकाशे हि, बहवः—अनेके, अम्भोदाः—मेघाः, सन्ति—विद्यन्ते, सर्वेऽपि—सकला अपि, एतादृशाः—ईदृशाः (करुणापराः) न—नहि सन्ति, केचिद्—मेघाः, वृष्टिभिः—वर्षाभिः, वसुधां—पृथ्वीम्, आर्द्रयन्ति—क्लेदयन्ति, केचिद्, वृथा—व्यर्थं, गर्जन्ति—महान्तं घोषं कुर्वन्ति, यं यं—कञ्चिन्मेघं, पश्यसि—अवलोकयसि, तस्य तस्य—सर्वस्य मेघस्य, पुरतः—अग्रे, दीनं—कृपणं, वचः—वचनं, मा ब्रूहि—मा वद ।

अनुवाद—रे मित्र चातक ! सावधान मन से मेरी बातें सुनो । आकाश में बहुत से मेघ हैं पर सब ऐसे ही नहीं हैं । कुछ अपनी वृष्टि से पृथ्वी को भिगो देते हैं और कुछ व्यर्थ ही गरजते-तरजते रहते हैं । इसलिये जिस-जिस को देखो उसी के सामने अपना दीन वचन मत बोलो—सभी को अपनी कातरोक्ति मत सुनाओ ।

Hallo friend Chataka ! Listen to me attentively for a . ent. There are numerous clouds in the sky; but all of then not of this type. Some of them (simply) moisten the earth v their showers; while others roar in vain. Therefore, donot utter your piteous cry before each and every one you happen to see.

संस्कृत-व्याख्या—यथा चातकैराकाशे मेघमात्रं दृष्ट्वा जलं न प्रार्थनीयं, यतो केभ्यश्चिन्मेघेभ्यः जलं भवति केचिच्च व्यर्थमेव गर्जनं कुर्वन्ति न तु वर्षणम्, तथैव याचकैरपि धनाशया यः कोऽपि दाता नार्थयितव्यः, परीक्ष्यैव स्वाभिप्रायः प्रकाशनीयः।

टिप्पणी—(१) सावधानमनसा—स्वस्थ चित्त से। अवधानेन सहितं सावधानम् (तुल्ययोगे बहुव्रीहिः), सावधानं मनः (कर्म० स०) तेन। (२) अम्भोदाः—बादल। अम्भस्√दा+क। (३) आर्द्रयन्ति—तर कर देते हैं। आर्द्र+णिच् (नामधातु)+लट्। (४) पुरतः—आगे। पुरा+तस्। यह अव्यय है।

इसमें अप्रस्तुतप्रशंसा अलंकार तथा शार्दूलविक्रीडित छन्द है।

गुणवान् ही प्रशंसार्ह है—

किं तेन हेमगिरिणा रजताद्रिणा वा<br>
यत्राश्रिताश्च तरवस्तरवस्त एव।<br>
मन्यामहे मलयमेव यदाश्रयेण<br>
कङ्कोलनिम्बकुटजा अपि चन्दनानि ॥१७॥

अन्वयः—तेन हेमगिरिणा रजताद्रिणा वा किं यत्राश्रिताः तरवः ते एव तरवः (तिष्ठन्ति), मलयमेव मन्यामहे यदाश्रयेण कङ्कोलनिम्बकुटजाः अपि चन्दनानि (भवन्ति)।

संस्कृत-व्याख्या—तेन, हेमगिरिणा—सुमेरुपर्वतेन, रजताद्रिणा—कैलासपर्वतेन, वा, किं—को लाभः ? यत्राश्रिताः यत्र संस्थिताः, तरवः—वृक्षाः, ते एव—पूर्वरूपाः साधारणाः एव, तरवः—वृक्षाः (तिष्ठन्ति), मलयमेव—मलयपर्वतमेव, मन्यामहे—सम्मानदृशा पश्यामः, यदाश्रयेण—यत्प्रदेशावस्थानेन, कङ्कोलनिम्बकुटजाः अपि—कङ्कोलादिनामकाः वृक्षाः, चन्दनानि—चन्दनवृक्षवत् सौगन्ध्ययुक्ताः (भवन्ति)।

अनुवाद—उस स्वर्ण पर्वत से क्या या उस चाँदी के पहाड़ से क्या लाभ जब वहाँ पर के वृक्ष निरे वृक्ष ही बने रहते हैं—जैसे के तैसे ही रह जाते हैं ? हम मलय पर्वत को ही मानते हैं। उसको सराहते है, जहाँ रह कर कंकोल, नीम और अर्जुन वृक्ष भी चन्दन हो जाते हैं।

What is one to do with the mountain of gold or with the mountain of silver, when the trees standing on them remain the same trees as they are; we honour the mountain Malaya alone, growing whereon, even the Kamkola, the neem and the kutaja trees become sandal trees.

संस्कृत-भावार्थ—गुणवद्भिरपि तैः को लाभो यैः स्वाश्रिता गुणवन्तो न कृताः, स तु बहुमानपात्रं येन स्वाश्रिता निर्गुणा अपि गुणवन्तो विहिताः। यथा मलयाचल एवादरणीयो यत्र सर्व एव वृक्षाश्चन्दनत्वं यान्ति सुवर्णमयेन मेरुणा रजतमयेन कैलासेन वा को लाभः यत्र नैकोऽपि तरुः सुवर्णमयो रजतमयो वा जातः।

टिप्पणी—(१) हेमगिरिणा—सुमेरु पर्वत (सोने के पहाड़) से। (२) रजताद्रिणा—कैलास पर्वत (चांदी के पहाड़) से। (३) यत्राश्रिताः—जिस पर स्थित। (४) कङ्कोलनिम्बकुटजाः—कंकोल, नीम और कुटज के वृक्ष। कङ्कोलाश्च निम्बाश्च कुटजाश्च इति कङ्कोलनिम्बकुटजाः (द्व० स०)। (५) चन्दनानि—चन्दन हो जाते हैं अर्थात् चन्दन के समान सुगंधित बन जाते हैं। यहाँ 'चन्दनाः स्युः' पाठभेद मिलता है।

इसमें वसन्ततिलका छन्द है।

सज्जनों का कष्ट अस्थायी होता है—

**पातितोऽपि कराघातैरुत्पतत्येव कन्दुकः।**
**प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तयः ॥१८॥**

अन्वयः—कराघातैः पातितः अपि कन्दुकः उत्पतति, एवं प्रायेण साधुवृत्तानां विपत्तयः अस्थायिन्यः।

संस्कृत-व्याख्या—कराघातैः—हस्तप्रताडनैः, पातितः अपि—नीचैः क्षिप्तोऽपि, कन्दुकः—गेन्दुकः, उत्पतति—ऊर्ध्वं गच्छति, एवम्—इत्थं, प्रायेण—बहुशः,

साधुवृत्तानां—सदाचरणानां, विपत्तयः—आपदः, अस्थायिन्यः—क्षणिकाः (भवन्ति)।

अनुवाद—हाथ से मारने से गेंद ऊपर उछलता है। प्रायः साधु पुरुषों की विपत्ति क्षणकालीन होती है—बहुत दिनों तक नहीं रहती।

A ball, struck with the blows of hand, does rebound upwards; generally the misfortunes of the virtuous people are not everlasting.

संस्कृत-भावार्थ—यथा कन्दुकः कराघातैः पातितोऽपि शीघ्रमेव ऊर्ध्वं गच्छति तथैव सज्जनः केनापि कारणेन कष्टमापन्नोऽपि शीघ्रमेव सुखितो भवति अर्थात् किञ्चित्कालपर्यन्तमेव तस्य दुःखं तिष्ठति।

टिप्पणी—(१) कराघातैः—हाथों की चोट से। करस्य आघाताः (ष० त०), तैः। (२) पातितः—गिराया हुआ। √पत्+णिच्+क्त। (३) साधुवृत्तानाम्—सदाचारियों का। साधु वृत्तं येषां ते साधुवृत्ताः (ब० स०), तेषाम्। (४) अस्थायिन्यः—थोड़े समय तक रहने वाली, क्षणिक। √स्था+णिनि, युक् आगम।

इसमें अनुष्टुप् छन्द है।

विचारपूर्वक ही कार्य करना चाहिए—

**कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी।**
**तथापि सुधिया भाव्यं सुविचार्यैव कुर्वता ॥१६॥**

अन्वयः—(यद्यपि) पुंसां फलं कर्मायत्तं, बुद्धिः कर्मानुसारिणी तथापि सुधिया सुविचार्यैव कुर्वता भाव्यम्।

संस्कृत-व्याख्या—(यद्यपि) पुंसां—पुरुषाणां, फलं—सुखदुःखादि, कर्मायत्तं—प्रारब्धाधीनं, बुद्धिः—प्रज्ञा, कर्मानुसारिणी—कृतस्य कर्मणोऽनुरूपा (भवति) तथापि—एवं सत्यपि, सुधिया—विदुषा, सुविचार्यैव—सुष्ठु चिन्तयित्वैव, कुर्वता—कार्यकारिणा, भाव्यम्—भवितव्यम्।

अनुवाद—मनुष्य जो फल भोगते हैं वह फल उनके कर्म पर निर्भर रहता है—जैसा भाग्य में बदा रहता है, मनुष्य की काम करने की बुद्धि भी वैसी ही

होती है। तो बुद्धिमान् लोगों को चाहिये कि जो कुछ करें, खूब सोच-विचार कर करें।

The fruit men get depends on their actions, and the inducement to action is in accordance with fate(action done in previous life), still a wise man should be doing an action after mature consideration.

संस्कृत-भावार्थ—यद्यपि पूर्वकर्मानुरूपैव बुद्धिः सत्कर्मणि असत्कर्मणि वा प्रवर्तते, तदनुसारमेव च सुखदुःखात्मकं फलं लभ्यते तथापि बुद्धिमता यदपि कर्त्तव्यं तत् सुविचार्यैव।

टिप्पणी—(१) पुंसाम्—लोगों का। (२) कर्मायत्तम्—कर्मों के अधीन। कर्मणाम् आयत्तम् (ष०,त०)। (३) कर्मानुसारिणी—कर्मों के अनुसार चलने वाली। कर्माणि अनुसर्तुं शीलं यस्याः सा कर्मानुसारिणी कर्मन्—अनु√सृ+णिनि कर्तरि ताच्छील्ये, ङीप्, उपपद स०। (४) सुविचार्य—अच्छी तरह विचार कर। सु—वि√चर्+णिच्+क्त्वा—ल्यप्। (५) भाव्यम्—होना चाहिए।√भू+ण्यत्।

इसमें भी अनुष्टुप् छन्द है।

प्रारब्ध को कोई नहीं मिटा सकता—

**पत्रं नैव यदा करीरविटपे दोषो वसन्तस्य किं**
**नोलूकोऽप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम्।**
**धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणम्**
**यत्पूर्वं विधिना ललाटलिखितं तन्मार्जितुं कः क्षमः? ॥२०॥**

अन्वयः—यदा करीरविटपे पत्रं नैव (तर्हि) वसन्तस्य किं दोषः? यदि दिवा उलूको न अवलोकते (तर्हि) सूर्यस्य किं दूषणम्? (यदि) चातकमुखे धाराः नैव पतन्ति (तर्हि) मेघस्य किं दूषणम्? यत् पूर्वं विधिना ललाटलिखितं तत् मार्जितुं कः क्षमः?

संस्कृत-व्याख्या—यदा—यदि, करीरविटपे—करीरनामकवृक्षशाखायां, पत्रं—पर्णं, नैव—नहि कदापि भवतीत्यर्थः, (तर्हि) वसन्तस्य—मधुमासस्य, किं दोषः—अपराधः किम्? नास्तीत्यर्थः। यदि—चेत्, दिवा—दिने, उलूकः—दिवान्धः,

न अवलोकते—न पश्यति, (तर्हि) सूर्यस्य—भास्करस्य, किं दूषणम्—दोषः किम् ? नास्त्येवेत्यर्थः। (यदि) चातकमुखे—सारङ्गवदने, धाराः—वृष्टिजल-धाराः, नैव पतन्ति—न गच्छन्ति, (तर्हि) मेघस्य—जलधरस्य, किं दूषणम्—दोषः किम् ? नास्त्येवेत्यर्थः। यत्—यत्किञ्चिदपि, पूर्वं—जन्मकाले, विधिना—ब्रह्मणा, ललाटलिखितं—ललाटे भाले अक्षररूपेण विन्यस्तं, तत्, मार्जितुं—प्रोञ्छितुं, कः क्षमः—कः समर्थः ? नहि कोऽपीत्यर्थः।

अनुवाद—यदि करील के वृक्ष में पत्ता नहीं होता तो वसन्त का इसमें क्या दोष ? यदि दिन में उल्लू नहीं देखता तो इसमें सूर्य का क्या दोष ? यदि जल-धारा चातक के मुंह में नहीं गिरती तो मेघ का इसमें क्या दोष ? विधि ने जो ललाट में पहले ही लिख दिया है उसे कौन मेट सकता है ? "विधि का लिखा को मेटन हारा" तुलसीदास।

What is the fault of Spring, if there is not a single leaf on the branch of the Karira-tree? What is the fault of the Sun if the owl does not see in the day time. What blame on the cloud if the showers do not fall into the mouth of the Chataka bird ? Who is able to wipe out what has been previously written on the forehead by Providence.

संस्कृत-भावार्थ—ब्रह्मणा यस्य भाग्ये यत्किञ्चित् लिखितं स तदेव प्राप्नोति। तत्र किञ्चिदपि परिवर्तनं न भवति। यदि सर्वेष्वपि वृक्षेषु समृद्धिमत्सु सत्सु करीरवृक्षे पत्रं नास्ति तर्हि वसन्तः तत्र किं करोतु ? दिने सर्वतः प्रकाशे प्रसृते यदि उलूकपक्षी नावलोकते तर्हि तत्र सूर्यस्य को दोषः ? सर्वतो जलधाराभिः प्लावितायां भुवि चातकमुखे धाराः न पतन्ति तत्र मेघस्य कोऽपराधः ? एताव-ताऽवगन्तव्यं यद् भाग्ये यन्नास्ति तन्नैव लभ्यते।

टिप्पणी—(१) करीरविटपे—करील के पेड़ की डाल में। (२) चातकमुखे—पपीहे के मुंह में। (३) ललाटलिखितम्—ललाट पर या भाग्य में लिखा हुआ। ललाटे लिखितम् (स० त०)। मार्जितुम्—पोंछने या मिटाने के लिए। √मृज्+तुमुन् 'मृजेर्वृद्धिः' इति सूत्रेण वृद्धिः।

इस श्लोक में शार्दूलविक्रीडित छन्द है।

**यां चिन्तयामि सततं मयि सा विरक्ता**
**साप्यन्यमिच्छति जनं स जनोऽन्यसक्तः।**

**अस्मत्कृते च परिशुष्यति काचिदन्या**
**धिक्तां च तं च मदनं च इमां च मां च ॥२१॥**

**अन्वयः**—(अहम्) याम् सततम् चिन्तयामि, सा मयि विरक्ता, सा अन्यम् जनम् इच्छति, अपि जनः स अन्यसक्तः। काचित् अन्या अस्मत्कृते च परिशुष्यति, धिक् ताम् च, तम् च, मदनम् च, इमाम् च, माम् च।

**संस्कृत-व्याख्या**—(अहम्) यां—रमणीं स्वप्रियतमामिति यावत्, सततं—नित्यं, चिन्तयामि—ध्यायामि, सा—रमणी, मयि, विरक्ता—अनुरागरहिता, अन्यं—मदतिरिक्तं, जनं—पुरुषम् जारमित्यर्थः, इच्छति—वाञ्छति, स जनः अपि—तस्याः जारोऽपि, अन्यसक्तः—अन्यस्यां तदतिरिक्तायां कामुक्यां सक्तः अनुरक्तः। काचित् अन्या—प्रणयिनी वेश्येति यावत्, अस्मत्कृते—मदर्थं, परिशुष्यति—उत्ताम्यति, (अतः) तां च—मत्प्रियतमां च, धिक्—धिक्कारः (अस्तु), तं च—तस्याः हृद्यं जनं च (धिक्), मदनं च—कन्दर्पं च (धिक्), इमां च—वेश्यां च (धिक्), मां च (धिक्)।

**अनुवाद**—जिस स्त्री की चिंता मैं सदा किया करता हूँ वह मुझसे विरक्त रहती है, वह किसी दूसरे पुरुष को चाहती है, वह पुरुष भी दूसरी स्त्री में प्रेमासक्त है, कोई दूसरी हमारे लिए तड़प रही है; उस स्त्री को धिक्कार, उस पुरुष को धिक्कार, कामदेव को धिक्कार और धिक्कार है इस स्त्री को और मुझको।

She, of whom I constantly think is indifferent to me. She longs for another man, and he, too, is devoted to another woman. Some other woman pines for us. Fie, fie, upon that woman, fie upon him, fie upon Cupid, fie upon this woman, and fie upon me.

**संस्कृत-भावार्थ**—यां स्त्रीम् अहं सततं मम प्राणप्रियेति विभावयामि सा यथार्थतो मयि विरक्ता अस्ति, यतो हि सा जारं कामयते। सोऽपि पुरुषः तद्भिन्नायां स्त्रियामासक्तः। मां च काचन अन्या रमणी अभिलषति। अतः तां मत्प्रियां धिक्; तस्याः अभीष्टं जनं धिक्; सर्वमिदं मदनकृतमिति तं मदनमपि धिक्; इमां मत्प्रणयिनीं वेश्यामपि धिक्; यतः एवं स्त्रीरूपेण वञ्चितोऽहम् अतः मां च धिक्।

टिप्पणी—(१) सततम्—नित्य, सदा। सम्√तन्+क्त भावे=सततम् वा सन्ततम् 'समो वा हिततयोः' इति कारिकया विकल्पेन समो मस्य लोपः। अत्र क्रियाविपणत्वात् द्वितीया। (२) मयि—मेरे विषय में विरक्त है, यह भाव है। विषयाधिकरणे सप्तमी (३) अन्यसक्तः—दूसरी (स्त्री) में आसक्त। अन्यस्यां सक्तः (स० त०), 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इससे पुंवद्भाव होने के कारण 'अन्या' 'अन्य' में परिणत हो गया। √सञ्ज्+क्त कर्तरि=सक्तः। (३) अस्मत्कृते—हमारे लिए। अस्माकं कृते (प० त०)। (४) परिशुष्यति सूख रही है या काम-सन्तप्त हो रही है। यहाँ 'परितुष्यति' पाठभेद है। अर्थ होगा—सन्तुष्ट हो रही है। (६) तां च तं च मदनं च इमां च मां च—मेरी प्रिया को, उसके जार को, कामदेव को, इस (वेश्या) को और मुझे। यहाँ 'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु। द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते' इस वार्तिक से 'धिक्' के योग में द्वितीया हुई। यहाँ 'च इमां' में 'आद्गुणः' सूत्र से गुणसन्धि होनी चाहिए, किन्तु 'संहितैकपदे नित्या नित्या धातूपसर्गयोः। नित्या समासे वाक्ये तु सा विवक्षामपेक्षते॥' इस कारिका के बल से वाक्य में विवक्षाधीन सन्धि होने के कारण यहाँ सन्धि नहीं की गई। आलंकारिकों के मत में यहाँ यह विसन्धिदोष है। मदयति हर्षयति इति मदनः√मद्+णिच्+ल्यु 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इत्यनेन।

इस श्लोक में वसन्ततिलक छन्द है। 'ज्ञेयं वसन्ततिलकं तभजा जगौ गः'।

विशेष—किंवदन्ती है कि किसी योगी ने राजा भर्तृहरि को एक जरानाशक फल दिया। राजा ने वह फल अपनी पत्नी को दिया। रानी ने उसे अपने उप-पति को दे दिया। उस पुरुष ने वह फल अपनी प्रेमिका एक वेश्या को दे डाला। उस वेश्या ने भी वह फल राजा को दिया। भर्तृहरि उसे देखकर उसकी खोज-बीन करते हुए परम वैराग्य को प्राप्त हुए। उसके बाद ही वन जाने के इच्छुक भर्तृहरि ने तीनों शतकों की रचना की। यह बात असंगत मालूम होती है कि नीतिशतक के रचयिता कवि अपने गृहच्छिद्र को स्वयं ही प्रकट करे। यह श्लोक नीतिशतक में रखने योग्य भी नहीं है। कई संस्करणों में यह श्लोक नहीं मिलता है। इसको वैराग्यशतक में रखा जा सकता है।

# नीतिशतक संबंधी प्रश्न

[निम्नलिखित प्रश्नों के उत्तर प्रस्तुत पुस्तक के भूमिकाभाग तथा ग्रन्थभाग में मिल जायँगे]

(१) वाह्य साक्ष्य तथा अन्तः साक्ष्य के आधार पर भर्तृहरि का काल निर्धारण कीजिए।

(२) क्या शतक के रचयिता और वाक्यपदीय के रचयिता एक ही व्यक्ति थे? इस पर अपने विचार प्रकट कीजिए।

(३) भर्तृहरि का इतिवृत्त लिखिए।

(४) नीतिशतक के आधार पर प्रकृति-चित्रण कीजिए।

(५) संक्षेप में नीतिशतक का मूल्यांकन कीजिए।

(६) नीतिशतक की भाषा, अलंकार तथा छन्द पर एक टिप्पणी लिखिए।

(७) निम्नलिखित शीर्षकों पर भर्तृहरि ने अपने क्या विचार प्रकट किये है, वह संक्षेप में बताइए :—(क) मानशौर्यपद्धति, (ख) कर्मपद्धति, (ग) दैव-पद्धति, (घ) अर्थपद्धति, (ङ) विद्वत्पद्धति।

(८) अधोलिखित विषयों पर नीतिशतक से श्लोक उद्धृत कीजिए :— (क) मूर्खों को मार्ग पर लाना कठिन है। (ख) वुद्धि का महत्त्व। (ग) धन की शक्ति।

(९) शतक के आधार पर राजा और कवि की तुलना कीजिए और सेवा-धर्म की कठिनाई पर भर्तृहरि का अभिमत वताइए।

(१०) महापुरुषों के जन्मजात गुण कौन-से हैं? सन्मित्र तथा सत्पुरुष के क्या लक्षण है?

(११) भाग्य के विषय में भर्तृहरि के क्या विचार थे? क्या वे भाग्यवादी थे?

(१२) नीतिशतक में वर्णित विद्वज्जन-महिमा के आधार पर विद्या के महत्त्व पर प्रकाश डालिए।

(१३) चरित्र का भर्तृहरि ने क्या महत्त्व बताया है? राजनीति की अनेक-रूपता पर उनके विचार प्रकट कीजिए :

(१४) विष्णु के दस अवतार कौन-कौन हैं? क्या भर्तृहरि बुद्ध को भी एक अवतार मानते हैं?

(१५) निम्नलिखित सूक्तियों की, प्रसंग निर्देश पूर्वक हिन्दी में व्याख्या कीजिए :—

(क) नहि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम्।

(ख) विवेकभ्रष्टानां भवति विनिपातः शतमुखः।

(ग) अवस्था वस्तूनि प्रथयति संकोचयति च।

(घ) विभूषणं मौनमपण्डितानाम्।

(ङ) प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते।

(च) सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम्।

(छ) कुत्स्याः स्युः कुपरीक्षकाः न मणयो यैरर्घतः पातिताः।

(ज) सत्संगतिः कथय किन्न करोति पुंसाम्।

(झ) वाराङ्गनेव नृपनीतिरनेकरूपा।

(ञ) सर्वे गुणाः काञ्चनमाश्रयन्ते।

(ट) सन्तः स्वयं परहितेषु कृताभियोगाः।

(ठ) सेवाधर्मः परमगहनो योगिनामप्यगम्यः।

(ड) न निश्चितार्थाद्विरमन्ति धीराः।

(ढ) प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः।

(ण) मनस्वी कार्यार्थी गणयति न दुःखं न च सुखम्।

(त) न्याय्यात् पथः प्रविचलन्ति पदं न धीराः।

(थ) भवन्ति नम्रास्तरवः फलागमैः।

(१६) निम्नलिखित शब्दों की व्युत्पत्ति लिखिए :—

उल्लीढ, आदधान, तनिम्ना, क्षीण, हिंस, गोचर, मुखर, पावक, क्लिन्न, दुर्विदग्ध, चटुल, मनस्वी, कदर्थित, इन्द्रिय, प्रमाणीकृत, द्विजाः, पञ्चषाः, जीवमानः, भागधेयम्, उपस्कृत, संस्कृत, पयोधिः, प्रतिपद्यमान, दैन्य, सहिष्णु, आत्मीय, क्षान्ति, संसर्ग, संघात, मा अवमंस्थाः, विहित, अभ्युदय।

(१७) निम्नलिखित में सन्धि-विच्छेद करते हुए सन्धि के नियमों का निर्देश कीजिए :—

पिबेः ... -नयान्धीलन्, ... ष्योस्तिन्, ... यद्यस्ति, सं. ...

(१८) नि-...

करप्रशानिपुटके । ...नानावम्दमूलफलानितम् । मन्दभाग्यः । ज्ञानलवदुर्विदग्धम् । सम्निधिरत्नपूर्णा । दुर्जनसंकाशात् । हसविवादनिवृत्तः । विवेकभ्रष्टानाम् । अतिरमसकृतानाम् । साहित्यसंगीतकलाविहीनः । अशेषगुणाकरम् । शास्त्रोपस्कृतशब्दसुन्दरगिरः । म्लानेन्द्रियस्य । मधिगम्यरत्नाधानि । भग्नाशस्य । चन्द्रोज्ज्वलाः । शास्त्रोदनरुचिः । ...दर्शनम् । ...वृक्षलता । मदनतिलकपोलमिलितषु ।

(१९) निम्नलिखित हिन्दी को नियमोल्लेखपूर्वक विभक्ति का निर्देश कीजिए :—

तेजसे (श्लोक संख्या १), मकरवक्त्रदंष्ट्रान्तरात् (श्लोक सं० ४), निरपमरसप्रीत्या (श्लोक सं० ६), मूर्खस्य (श्लोक सं० ११), भर्तृन्यः (श्लोक सं० १३), कवचेन (श्लोक सं० २०), गन्धः (श्लोक ३१), येन (श्लोक ३२), स्वपात्रपेन (श्लोक सं० ४०), सज्जनसंगतौ (श्लोक सं० ५२), लोकापवादात् (श्लोक सं० ५२), प्राणाघातात् (श्लोक सं० ५५), पृथुतुलनराय (श्लोक सं० ६६), मामासात् (श्लोक सं० ६), येभ्यः (श्लोक सं० ६२)।

(२०) निम्नलिखित श्लोकों की टीका-पद्धति से संस्कृत में व्याख्या कीजिए :—

३, १२, १४, २४, २७, ३१, ३८, ४० ।

(२१) निम्नलिखित श्लोकों का संस्कृत में भावार्थ दीजिए :—

४, ६, १०, १८, २३, २६, ३२, ३६, ४५, ५५, ६०, ६३ ।

(२२) निम्नलिखित श्लोकों का हिन्दी में अनुवाद कीजिए :—

५, ६, १५, १६, ३०, ३६, ४६, ५१, ५८, , ८४, ६०; ६७, १०३, ११५ ।

(२३) नीतिशतक में अन्य ग्रन्थों से उद्धृत श्लोकों को बताइए :—